तास्ततो व्यतिरिक्ताः अव्यतिरिक्ता वा । व्यतिरेके तास्तस्येति संबन्धाभावः । अतिप्रसङ्गात् । अव्यतिरेके तु तद्वानेवेति तदवस्थितैव स्थिरैकरूपताहानिः । कथं च तदेकान्तैकरूपत्वेऽवस्थाभेदोपि भवेत् । इति ॥ किंच सुखदुःखभोगौ पुण्यपापनिवर्त्यौ तन्निर्वर्तनं चार्थक्रिया सा च कूटस्थनित्यस्य क्रमेण अक्रमेण वा नोपपद्यत इत्युक्तप्रायम् । अत एवोक्तं न पुण्यपापे इति । पुण्यं दानादिक्रियोपार्जनीयं शुभं कर्म पापं हिंसादिक्रियासाध्यमशुभं कर्म । ते अपि न घटेते । प्रागुक्तनीतेः ॥ तथा न बन्धमोक्षौ । बन्धः कर्मपुद्गलैः सह प्रतिप्रदेशमात्मनो वन्हयःपिण्डवद् अन्योन्यसंश्लेषः । मोक्षः कृत्स्नकर्मक्षयः । तावप्येकान्तनित्ये न स्याताम् । बन्धो हि संयोगविशेषः स च अप्राप्तानां प्राप्तिः इतिलक्षणः । प्राक्कालभाविनी अप्राप्तिरन्यावस्था उत्तरकालभाविनी प्राप्तिश्चान्या । तदनयोरप्यवस्थाभेददोषो दुस्तरः । कथं चैकरूपत्वे सति तस्याकस्मिको बन्धनसंयोगः । बन्धनसंयोगाच्च प्राक् किं नायं मुक्तोऽभवत् । किंच तेन बन्धनेनासौ विकृतिमनुभवति न वा । अनुभवति चेत् चर्मादिवद् अनित्यः । नानुभवति चेत् निर्विकारत्वे सता असता वा तेन गगनस्येव न कोऽप्यस्य विशेषः इति बन्धवैकल्यान्नित्यमुक्त एव स्यात् । ततश्च विशीर्णा जगति बन्धमोक्षव्यवस्था । तथा च पठन्ति ।

वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम् ।
चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्फलः ॥

बन्धानुपपत्तौ मोक्षस्याप्यनुपपत्तिः । बन्धनविच्छेदपर्यायत्वान्मुक्तिशब्दस्य । इति ॥

एवमनित्यैकान्तवादेपि सुखदुःखाद्यनुपपत्तिः । अनित्यं हि अत्यन्तोच्छेदधर्मकम् । तथाभूते चात्मनि पुण्योपादानक्रियाकारिणो निरन्वयं विनष्टत्वात् कस्य नाम तत्फलभूतसुखानुभवः । एवं पापोपादानक्रियाकारिणोपि निरवयवनाशे कस्य दुःखसंवेदनमस्तु । एवं चान्यः क्रियाकारी अन्यश्च तत्फलभोक्ता इत्यसमञ्जसमापद्यते । अथ

यस्मिन्नेव हि संताने आहिता कर्मवासना ।
फलं तत्रैव संधत्ते कर्पासे रक्तता यथा ॥

इतिवचनान्नासमञ्जसमित्यपि वाङ्मात्रम् । संतानवासनयो रवास्तवत्वेन प्रागेव निर्लोठितत्वात् । तथा पुण्यपापेपि न घटेते । तयोर्हि अर्थक्रिया सुखदुःखोपभोगः तदनुपपत्तिश्चानन्तरमेवोक्ता । ततोऽर्थक्रियाकारित्वाभावात् तयोरप्यघटमानत्वम् । किंचानित्यः क्षणमात्रस्थायी तस्मिंश्च क्षणे उत्पत्तिमात्रव्यग्रत्वात् तस्य कुतः पुण्यपापोपादानक्रियार्जनम् । द्वितीयादिक्षणेषु चावस्थातुमेव न लभते । पुण्यपापोपादानक्रियाभावे च पुण्यपापे कुतः । निर्मूलत्वात् । तदसत्त्वे च कुतस्तनः सुखदुःखभोगः । आस्तां वा कथंचिदेतत् । तथापि पूर्वक्षणसदृशेनोत्तरक्षणेन भवितव्यम् । उपादानानुरूपत्वाद् उपादेयस्य । ततः पूर्वक्षणाद् दुःखितादुत्तरक्षणः कथं सुखित उत्पद्यते । कथं च सुखितात्ततः स दुःखितः स्यात् । विसदृशभागतापत्तेः । एवं पुण्यपापादावपि । तस्माद्यत्किंचिदेतत् ॥ एवं बन्धमोक्षयोरप्यसंभवः । लोकेपि हि य एव बद्धः स एव मुच्यते । निरन्वयनाशाभ्युपगमे चैकाधिकरणत्वाभावात् संतानस्य चावास्तवत्वात् कुतस्तयोः संभावनामात्रमपि । इति परिणामिनि चात्मनि स्वीक्रियमाणं सर्वं निर्बाधमुपपद्यते ।

परिणामोऽवस्थान्तरगमनं न च सर्वथा ह्यवस्थानम् ।
न च सर्वथा विनाशः परिणामस्तद्विदामिष्टः ॥

इतिवचनात् । पातञ्जलटीकाकारोऽप्याह । अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिः परिणामः इति ॥ एवं सामान्यविशेषसदसदभिलाप्यानभिलाप्यैकान्तवादेष्वपि सुखदुःखाद्यभावः स्वयमभियुक्तैरभ्यूह्यः ॥

अथोत्तरार्धव्याख्या । एवमनुपपद्यमानेपि सुखदुःखभोगादिव्यवहारे परैः परतीर्थिकैः अथ च परमार्थतः शत्रुभिः । परशब्दो हि शत्रुपर्यायोप्यस्ति । दुर्नीतिवादव्यसनासिना । नीयते एकदेशविशिष्टोर्थः प्रतीतिविषयमाभिरिति नीतयो नयाः । दुष्टा नीतयो दुर्नीतयो दुर्नयाः । तेषां वदनं परेभ्यः प्रतिपादनं दुर्नीतिवादः । तत्र यद् व्यसनम् अत्यासक्तिः औचित्यनिरपेक्षा प्रवृत्तिरिति यावत् दुर्नीतिवादव्यसनम् । तदेव सद्बोधशरीरोच्छेदनशक्तियुक्तत्वाद् असिरिव असिः कृपाणः दुर्नीतिवादव्यसनासिः । तेन दुर्नीतिवादव्यसनासिना करणभूतेन दुर्नयप्ररूपणहेवाकखड्गेन । एवम् इत्यनुभवसिद्धं प्रकारमाह । अपिशब्दस्य भिन्नक्रमत्वाद् अशेषमपि जगत् निखिलमपि त्रैलोक्यम् । तात्स्थ्यात् तद्व्यपदेश इति त्रैलोक्यगतजन्तुजातम् । विलुप्तम् सम्यग्ज्ञानादिभावप्राणव्यपरोपेणेन व्यापादितम् । तत् त्रायस्व इत्याशयः । सम्यग्ज्ञानादयोहि । भावप्राणाः प्रावचनिकैर्गीयन्ते । अत एव सिद्धेष्वपि जीवव्यपदेशः । अन्यथा हि जीवधातुः प्राणधारणार्थेभिधीयते तेषां च दशविधप्राणधारणाभावादजीवत्वप्राप्तिः । सा च विरुद्धा । तस्मात्संसारिणो दशविधद्रव्यप्राणधारणाज्जीवाः । सिद्धाश्च ज्ञानादिभावप्राणधारणात् । इति सिद्धम् ॥ दुर्नयस्वरूपं चोत्तरकाव्ये व्याख्यास्यामः । इति काव्यार्थः ॥

---

सांप्रतं दुर्नयनयप्रमाणप्ररूपणद्वारेण प्रमाणनयैरधिगमः इति वचनाज्जीवाजीवादितत्त्वाधिगमनिबन्धनानां तेषां प्रमाणनयानां प्रतिपादयितुः स्वामिनः स्याद्वादविरोधिदुर्नयमार्गनिराकरिष्णुमनन्यसामान्यं वचनातिशयं स्तुवन्नाह ।

सदेव सत्स्यात्सदिति त्रिधार्थो
मीयेत दुर्नीतिनयप्रमाणैः ।
यथार्थदर्शी तु नयप्रमाण-
पथेन दुर्नीतिपथं त्वमास्थः ॥ २८ ॥

अर्थ्यते परिच्छिद्यत इत्यर्थः पदार्थः । त्रिधा त्रिभिः प्रकारैः । मीयेत परिच्छिद्येत । विधौ सप्तमी । कैस्त्रिभिः प्रकारैरित्याह । दुर्नीतिनयप्रमाणैः । नीयते परिच्छिद्यते एकदेशविशिष्टोऽर्थ आभिरिति नीतयः नयाः । दुष्टा नीतयो दुर्नीतयो दुर्नया इत्यर्थः । नया नैगमाद्याः । प्रमीयते परिच्छिद्यतेऽर्थोऽनेकान्तविशिष्टोऽनेनेति प्रमाणं स्याद्वादात्मकं प्रत्यक्षपरोक्षलक्षणम् । दुर्नीतयश्च नयाश्च प्रमाणे च दुर्नीतिनयप्रमाणानि तैः । केनोल्लेखेन मीयेतेत्याह सदेव सत्स्यात्सदिति । सदिति अव्यक्तत्वान्नपुंसकत्वं यथा किं तस्या गर्भे जातमिति । सदेवेति दुर्नयः । सदिति नयः । स्यात्सदिति प्रमाणम् । तथा हि । दुर्नयस्तावत्सदेवेति ब्रवीति । अस्त्येव घट इति । अयं वस्तुन्येकान्तास्तित्वमेवाभ्युपगच्छन्नितरधर्माणां तिरस्कारेण स्वाभिप्रेतमेव धर्मं व्यवस्थापयति । दुर्नयत्वं चास्य मिथ्यारूपत्वात् । मिथ्यारूपत्वं च तत्र धर्मान्तराणां सतामपि निह्नवात् । तथा सदित्युल्लेखवान्नयः । स ह्यस्ति घटः इति घटे स्वाभिमतमस्तित्वधर्मं प्रसाधयन् शेषधर्मेषु गजनिमीलिकामालम्बते । न चास्य दुर्नयत्वम् । धर्मान्तरा-

तिरस्कारात् । न च प्रमाणत्वम् । स्याच्छब्देनालाञ्छितत्वात् । स्यात्सदिति स्यात्कथंचित्सद्वस्तु इति प्रमाणम् । प्रमाणत्वं चास्य दृष्टेष्टाबाधितत्वाद्विपक्षे बाधकसद्भावाच्च । सर्वं हि वस्तु स्वरूपेण सत् पररूपेण चासदित्यसकृदुक्तम् । सदिति दिङ्मात्रदेशनार्थम् ॥ अनया दिशा असत्त्वनित्यत्वानित्यत्ववक्तव्यत्वावक्तव्यत्वसामान्यविशेषाद्यपि बोद्धव्यम् ॥

इत्थं वस्तुस्वरूपमाख्याय स्तुतिमाह यथार्थदर्शी इत्यादि । दुर्नीतिपथं दुर्नयमार्गम् । तुशब्दस्यावधारणार्थस्य भिन्नक्रमत्वात् त्वमेव । आस्थः त्वमेव निराकृतवान् । न तीर्थान्तरदैवतानि । केन कृत्वा । नयप्रमाणपथेन । नयप्रमाणे उक्तस्वरूपे । तयोर्मार्गेण प्रचारेण । यतस्त्वं यथार्थदर्शी । यथार्थोस्ति तथैव पश्यतीत्येवंशीलो यथार्थदर्शी । विमलकेवलज्योतिषा यथावस्थितवस्तुदर्शी । तीर्थान्तरशास्तारस्तु रागादिदोषकालुष्यकलङ्कितत्वेन तथाविधज्ञानाभावान्न यथार्थदर्शिनः । ततः कथं नाम दुर्नयपथमथने प्रगल्भन्ते ते तपस्विनः । नहि स्वयमनयप्रवृत्तः परेषामनयं निषेद्धुमुद्धुरतां धत्ते । इदमुक्तं भवति । यथा कश्चित्सन्मार्गवेदी परोपकारदुर्ललितः पुरुषश्चौरश्वापदकण्टकाद्याकीर्णं मार्गं परित्याज्य पथिकानां गुणदोषोभयविकलं दोषास्पृष्टं गुणयुक्तं च मार्गमुपदर्शयति एवं जगन्नाथोपि दुर्नयतिरस्करणेन भव्येभ्यो नयप्रमाणमार्गं प्ररूपयतीति । आस्थः इत्यस्यतेरद्यतन्यां शास्त्यसूवक्तिख्यातेरङ् इत्यङि श्वयत्यसूवचपतः श्वास्थवोचपप्तम् इति अस्थादेशे स्वरादेस्तासु इति वृद्धौ रूपम् ॥ मुख्यवृत्त्या च प्रमाणस्यैव प्रामाण्यम् । यच्चात्र नयानां प्रमाणतुल्यकक्षताख्यापनं तत्तेषामनुयोगद्वारभूततया प्रज्ञापनाङ्गत्वज्ञापनार्थम् । चत्वारि हि प्रवचनानुयोगमहानगरस्य द्वाराण्युपक्रमो निक्षेपोनुगमो नयश्चेति ।

एतेषां च स्वरूपमावश्यकभाष्यादेर्निरूपणीयम् । इह तु नोच्यते । ग्रन्थगौरवभयात् । अत्र चैकत्र कृतसमासान्तः पथिन्शब्दः । अन्यत्र चाव्युत्पन्नः पथशब्दोऽदन्त इति पथशब्दस्य द्विःप्रयोगो न दुष्यति ॥

अथ दुर्नयनयप्रमाणस्वरूपं किंचिन्निरूप्यते । तत्रापि प्रथमं नयस्वरूपम् । तदनधिगमे दुर्नयस्वरूपस्य दुष्परिज्ञानत्वात् । अत्र चाचार्येण प्रथमं दुर्नयनिर्देशो यथोत्तरं प्राधान्यावबोधनार्थः कृतः । तत्र प्रमाणप्रतिपन्नार्थैकदेशपरामर्शो नयः । अनन्तधर्माध्यासितं वस्तु स्वाभिप्रेतैकधर्मविशिष्टं नयति प्रापयति संवेदनकोटिमारोहयतीति नयः । प्रमाणप्रवृत्तेरुत्तरकालभावी परामर्श इत्यर्थः । नयाश्चानन्ताः । अनन्तधर्मत्वाद्वस्तुनस्तदेकधर्मपर्यवसितानां वक्तुरभिप्रायाणां च नयत्वात् । तथा चवृद्धाः ।

जावइआ वयणपहा तावइआ चेव हुंति नयवाया ।

इति । तथापि चिरंतनाचार्यैः सर्वसंग्राहिसप्ताभिप्रायपरिकल्पनाद्वारेण सप्त नयाः प्रतिपादिताः । तद्यथा । नैगमसंग्रहव्यवहारऋजुसूत्रशब्दसमभिरूढैवंभूता इति । कथमेषां सर्वग्राहकत्वमिति चेदुच्यते । अभिप्रायस्तावदर्थद्वारेण शब्दद्वारेण वा प्रवर्तते । गत्यन्तराभावात् । तत्र ये केचनार्थनिरूपणप्रवणाः प्रमात्रभिप्रायास्ते सर्वेप्याद्ये नयचतुष्टयेन्तर्भवन्ति । ये च शब्दविचारचतुरास्ते शब्दादिनयत्रय इति ॥

तत्र नैगमः सत्तालक्षणं महासामान्यम् अवान्तरसामान्यानि च द्रव्यत्वगुणत्वकर्मत्वादीनि तथान्त्यान् विशेषान् सकलासाधारणरूपलक्षणानवान्तर विशेषांश्चापेक्षया पररूपव्यावर्तनक्षमान् सामान्यादत्यन्तविनिर्लुठितस्वरूपानभिप्रैति । इदं च स्वतन्त्रसामान्यविशेषवादे क्षुण्णमिति न पृथक्प्रयत्नः । प्रवचन-

प्रसिद्धानिलयनप्रस्थदृष्टान्तद्वयगम्यश्चायम् ॥

संग्रहस्तु अशेषविशेषतिरोधानद्वारेण सामान्यरूपतया विश्वमुपादत्ते । एतच्च सामान्यैकान्तवादे प्राक् प्रपञ्चितम् ॥

व्यवहारस्त्वेवमाह । यथालोकग्राहमेव वस्त्वस्तु किमनया अदृष्टाव्यवह्रियमाणवस्तुपरिकल्पनकष्टपिष्टिकया । यदेव च लोकव्यवहारपथमवतरति तस्यैवानुग्राहकं प्रमाणमुपलभ्यते नेतरस्य । न हि सामान्यमनादिनिधनमेकं संग्रहाभिमतं प्रमाणभूमिः । तथानुभवाभावात् । सर्वस्य सर्वदर्शित्वप्रसङ्गाच्च । नापि विशेषाः परमाणुलक्षणाः क्षणक्षयिणः प्रमाणगोचराः । तथाप्रवृत्तेरभावात् । तस्मादिदमेव निखिललोकाबाधितं प्रमाणप्रसिद्धं कियत्कालभाविस्थूलतामाबिभ्राणमुदकाद्याहरणाद्यर्थक्रियानिर्वर्तनक्षमं घटादिकं वस्तुरूपं पारमार्थिकम् । पूर्वोत्तरकालभावितत्पर्यायपर्यालोचना पुनरज्यायसी । तत्र प्रमाणप्रसराभावात् । प्रमाणमन्तरेण च विचारस्य कर्तुमशक्यत्वात् । अवस्तुत्वाच्च तेषां किं तद्गोचरपर्यालोचनेन । तथाहि पूर्वोत्तरकालभाविनो द्रव्यविवर्ताः क्षणक्षयिपरमाणुलक्षणा वा विशेषा न कथंचन लोकव्यवहारमुपरचयन्ति । तन्न ते वस्तुरूपाः । लोकव्यवहारोपयोगिनामेव वस्तुत्वात् । अत एव पन्था गच्छति कुण्डिका स्रवति गिरिर्दह्यते मञ्चाः क्रोशन्तीत्यादिव्यवहाराणां प्रामाण्यम् । तथा च वाचकमुख्यः । लौकिकसम उपचारप्रायो विस्तृतार्थो व्यवहारः इति ॥

ऋजुसूत्रः पुनरिदं मन्यते । वर्तमानक्षणविवर्त्येव वस्तुरूपम् । नातीतमनागतं च । अतीतस्य विनष्टत्वादनागतस्यालब्धात्मलाभत्वात्खरविषाणादिभ्योऽविशिष्यमाणतया सकलशक्तिविरहरूपत्वान्नार्थक्रियानिर्वर्तनक्षमत्वं तदभावाच्च न वस्तुत्वम् । यदे-

वार्थक्रियाकारि तदेव परमार्थसत् इति वचनात् । वर्तमानक्षणालिङ्गितं पुनर्वस्तुरूपं समस्तार्थक्रियासु व्याप्रियत इति तदेव पारमार्थिकम् । तदपि च निरंशमभ्युपगन्तव्यम् । अंशव्याप्तेर्युक्तिरिक्तत्वात् । एकस्यानेकस्वभावतामन्तरेणानेकस्वावयवव्यापनायोगात् । अनेकस्वभावता एवास्तु इति चेत् न । विरोधव्याघ्राघ्रातत्वात् । तथाहि यद्येकः स्वभावः कथमनेकोऽनेकश्चेत्कथमेकः । एकानेकयोः परस्परपरिहारेणावस्थानात् । तस्मात्स्वरूपनिमग्नाः परमाणव एव परस्परोपसर्पणद्वारेण कथंचिन्निचयरूपतामापन्ना निखिलकार्येषु व्यापारभाज इति त एव स्वलक्षणं न स्थूलतां धारयत्पारमार्थिकमिति । एवमस्याभिप्रायेण यदेव स्वकीयं तदेव वस्तु न परकीयम् । अनुपयोगित्वात् । इति ॥

शब्दस्तु रूढितो यावन्तो ध्वनयः कस्मिंश्चिदर्थे प्रवर्तन्ते यथेन्द्रशक्रपुरंदरादयः सुरपतौ तेषां सर्वेषामप्येकमर्थमभिप्रैति किल । प्रतीतिवशात् । यथा शब्दाव्यतिरेकोर्थस्य प्रतिपाद्यते तथैव तस्यैकमनेकत्वं वा प्रतिपादनीयम् । न चेन्द्रशक्रपुरन्दरादयः पर्यायशब्दाविभिन्नार्थवाचितया कदाचन प्रतीयन्ते । तेभ्यः सर्वदा एकाकारपरामर्शोत्पत्तेरस्खलितवृत्तितया तथैव व्यवहारदर्शनात् । तस्मादेक एव पर्यायशब्दानामर्थ इति । शब्द्यते आहूयतेऽनेनाभिप्रायेणार्थ इति निरुक्तात् एकार्थप्रतिपादनाभिप्रायेणैव पर्यायध्वनीनां प्रयोगात् । यथा चायं पर्यायशब्दानामेकमर्थमभिप्रैति तथा तटस्तटी तटमिति विरुद्धलिङ्गलक्षणधर्माभिसंबन्धाद्वस्तुनो भेदं चाभिधत्ते । न हि विरुद्धधर्मकृतं भेदमनुभवतो वस्तुनो विरुद्धधर्मायोगो युक्तः । एवं संख्याकालकारकपुरुषादिभेदादपि भेदोभ्युपगन्तव्यः । तत्र संख्या एकत्वादिः कालोतीतादिः कारकं कर्त्रादि पुरुषः प्रथमपुरुषादिः ॥ समभिरूढस्तु

पर्यायशब्दानां प्रविभक्तमेवार्थमभिमन्यते । तद्यथा इन्दनादिन्द्रः । परमैश्वर्यमिन्द्रशब्दवाच्यं परमार्थतस्तद्वत्यर्थे । अतद्वत्यर्थे पुनरुपचारतो वर्तते । न वा कश्चित्तद्वान् । सर्वशब्दानां परस्परविभक्तार्थप्रतिपादितया आश्रयाश्रयिभावेन प्रवृत्त्यसिद्धेः । एवं शकनाच्छक्रः पूर्दारणात्पुरन्दर इत्यादिभिन्नार्थत्वं सर्वशब्दानां दर्शयति । प्रमाणयति च । पर्यायशब्दा अपि भिन्नार्थाः । प्रविभक्तव्युत्पत्तिनिमित्तकत्वात् । इह ये ये प्रविभक्तव्युत्पत्तिनिमित्तकास्ते ते भिन्नार्थका यथेन्द्रपशुपुरुषशब्दाः । विभिन्नव्युत्पत्तिनिमित्तकाश्च पर्यायशब्दा अपि । अतो भिन्नार्था इति ॥

एवंभूतः पुनरेवं भाषते । यस्मिन्नर्थे शब्दो व्युत्पाद्यते स व्युत्पत्तिनिमित्तमर्थो यदैव प्रवर्तते तदैव तं शब्दं प्रवर्तमानमभिप्रैति न सामान्येन । यथोदकाद्याहरणवेलायां योषिदादिमस्तकारूढो विशिष्टचेष्टावानेव घटोभिधीयते न शेषः । घटशब्दव्युत्पत्तिनिमित्तशून्यत्वात् पटादिवदिति । अतीतां भाविनीं वा चेष्टामङ्गीकृत्य सामान्येनैवोच्यत इति चेत् न । तयोर्विनष्टानुत्पन्नतया शशविषाणकल्पत्वात् । तथापि तद्द्वारेण शब्दप्रवर्तने सर्वत्र प्रवर्तयितव्यः । विशेषाभावात् । किंच यद्यतीतवर्त्स्यच्चेष्टापेक्षया घटशब्दोऽचेष्टावत्यपि प्रयुज्येत तदा कपालमृत्पिण्डादावपि तत्प्रवर्तनं दुर्निवारं स्यात् । विशेषाभावात् । तस्माद्यत्र क्षणे व्युत्पत्तिनिमित्तमविकलमस्ति तस्मिन्नेव सोर्थस्तच्छब्दवाच्य इति ॥

अत्र संग्रहश्लोकाः ।

अन्यदेव हि सामान्यमभिन्नज्ञानकारणम् ।
विशेषोप्यन्य एवेति मन्यते नैगमो नयः ॥ १ ॥
सद्रूपतानतिक्रान्तं स्वस्वभावमिदं जगत् ।
सत्तारूपतया सर्वं संगृह्णन् संग्रहो मतः ॥ २ ॥

व्यवहारस्तु तामेव प्रतिवस्तु व्यवस्थिताम् ।
तथैव दृश्यमानत्वाद्व्यापारयति देहिनः ॥ ३ ॥
तत्रर्जुसूत्रनीतिः स्याच्छुद्धपर्यायसंश्रिता ।
नश्वरस्यैव भावस्य भावात्स्थितिवियोगतः ॥ ४ ॥
विरोधिलिङ्गसंख्यादिभेदाद्भिन्नस्वभावताम् ।
तस्यैवं मन्यमानोयं शब्दः प्रत्यवतिष्ठते ॥ ५ ॥
तथाविधस्य तस्यापि वस्तुनः क्षणवर्तिनः ।
ब्रूते समभिरूढस्तु संज्ञाभेदेन भिन्नताम् ॥ ६ ॥
एकस्यापि ध्वनेर्वाच्यं सदा तन्नोपपद्यते ।
क्रियाभेदेन भिन्नत्वादेवंभूतोऽभिमन्यते ॥ ७ ॥

एत एव च परामर्शा अभिप्रेतधर्मावधारणात्मकतया शेषधर्मतिरस्कारेण प्रवर्तमाना दुर्नयसंज्ञामश्नुवते । तद्बलप्रभावितसत्ताका हि खल्वेते परप्रवादाः । तथा हि । नैगमनयदर्शनानुसारिणौ नैयायिकवैशेषिकौ । संग्रहाभिप्रायप्रवृत्ताः सर्वेऽप्यद्वैतवादाः सांख्यदर्शनं च । व्यवहारनयानुपातिप्रायश्चार्वाकदर्शनम् । ऋजुसूत्राकूतप्रवृत्तबुद्धयस्ताथागताः । शब्दादिनयावलम्बिनो वैयाकरणादयः । उक्तं च सोदाहरणं नयदुर्नयस्वरूपं श्रीदेवसूरिपादैः। तथा च तद्ग्रन्थः । नीयते येन श्रुताख्यप्रमाणविषयीकृतस्यार्थस्यांशस्तदितरांशौदासीन्यतः स प्रतिपत्तुरभिप्रायविशेषो नयः इति । स्वाभिप्रेतादंशादितरांशापलापी पुनर्नयाभासः । स व्याससमासाभ्यां द्विप्रकारः । व्यासतोऽनेकविकल्पः । समासतस्तु द्विभेदो द्रव्यार्थिकः पर्यायार्थिकश्च । आद्यो नैगमसंग्रहव्यवहारभेदात्त्रेधा । धर्मयोर्धर्मिणोर्धर्मधर्मिणोश्च । प्रधानोपसर्जनभावेन यद्विवक्षणं स नैकगमो नैगमः । सच्चैतन्यमात्मनीति धर्मयोः । वस्तुपर्यायवद्द्रव्यमिति धर्मिणोः । क्षणमेकं सुखी विषयासक्तजीव इति

धर्मधर्मिणोः । धर्मद्वयादीनामैकान्तिकपार्थक्याभिसंधिर्नैगमाभासः ॥ यथा आत्मनि सत्त्वचैतन्ये परस्परमत्यन्तं पृथग्भूते इत्यादि ॥ सामान्यमात्रग्राही परामर्शः संग्रहः । अयमुभयविकल्पः परोऽपरश्च । अशेषविशेषेष्वौदासीन्यं भजमानः शुद्धद्रव्यं सन्मात्रमभिमन्यमानः परः संग्रहः । विश्वमेकं सत् अविशेषादिति यथा । सत्ताद्वैतं स्वीकुर्वाणः सकलविशेषान्निराचक्षाणस्तदाभासः । यथा सत्तैव तत्त्वं ततः पृथग्भूतानां विशेषाणामदर्शनात् । द्रव्यत्वादीन्यवान्तरसामान्यानि मन्वानस्तद्भेदेषु गजनिमीलिकामवलम्बमानः पुनरपरसंग्रहः ॥ धर्माधर्माकाशकालपुद्गलजीवद्रव्याणामैक्यं द्रव्यत्वाभेदादित्यादिर्यथा । द्रव्यत्वादिकं प्रतिजानानस्तद्विशेषान्निह्नुवानस्तदाभासः । यथा द्रव्यत्वमेव तत्त्वं ततोर्थान्तरभूतानां द्रव्याणामनुपलब्धेरित्यादि ॥ संग्रहेण गोचरीकृतानामर्थानां विधिपूर्वकमवहरणं येनाभिसंधिना क्रियते स व्यवहारः । यथा यत्सत्तद्द्रव्यं पर्यायो वेत्यादिः । यः पुनरपारमार्थिकद्रव्यपर्यायविभागमभिप्रैति स व्यवहाराभासः । यथा चार्वाकदर्शनम् ॥ पर्यायार्थिकश्चतुर्धा ऋजुसूत्रः शब्दः समभिरूढ एवंभूतश्च ॥ ऋजु वर्तमानक्षणस्थायिपर्यायमात्रं प्राधान्यतः सूत्रयन्नभिप्राय ऋजुसूत्रः । यथा सुखविवर्तः संप्रत्यस्तीत्यादिः । सर्वथा द्रव्यापलापी तदाभासः । यथा तथागतमतम् ॥ कालादिभेदेन ध्वनेरर्थभेदं प्रतिपद्यमानः शब्दः । यथा बभूव भवति भविष्यति सुमेरुरित्यादिः । तद्भेदेन तस्य तमेव समर्थयमानस्तदाभासः । यथा बभूव भवति भविष्यति सुमेरुरित्यादयो भिन्नकालाः शब्दा भिन्नमेवार्थमभिदधाति भिन्नकालशब्दत्वात् तादृक्सिद्धान्यशब्दवदित्यादिः ॥ पर्यायशब्देषु निरुक्तिभेदेन भिन्नमर्थं समभिरोहन् समभिरूढः । इन्दनादिन्द्रः शकनाच्छक्रः पूर्दारणात्पुरन्दर इत्यादिषु यथा पर्यायध्वनीनामभिधेयनानात्वमेव

कक्षीकुर्वाणस्तदाभासः यथेन्द्रः शक्रः पुरन्दर इत्यादय शब्दा भिन्नाभिधेया एव भिन्नशब्दत्वात्करिकुरङ्गतुरङ्गशब्दवदित्यादिः ॥ शब्दानां स्वप्रवृत्तिनिमित्तभूतक्रियाविष्टमर्थं वाच्यत्वेनाभ्युपगच्छन्नेवंभूतः । यथेन्दनमनुभवन्निन्द्रः शकनक्रियापरिणतः शक्रः पूर्दारणप्रवृत्तः पुरन्दर इत्युच्यते । क्रियानाविष्टं वस्तु शब्दवाच्यतया प्रतिक्षिपंस्तु तदाभासः । यथा विशिष्टचेष्टाशून्यं घटाख्यं वस्तु न घटशब्दवाच्यं घटशब्दप्रवृत्तिनिमित्तभूतक्रियाशून्यत्वात् पटवदित्यादिः ॥ एतेषु चत्वारः प्रथमेर्थनिरूपणप्रवणत्वादर्थनयाः । शेषास्तु त्रयः शब्दवाच्यार्थगोचरतया शब्दनयाः ॥ पूर्वः पूर्वो नयः प्रचुरगोचरः परः परस्तु परिमितविषयः । सन्मात्रगोचरात्संग्रहान्नैगमो भावाभावभूमिकत्वाद्भूमविषयः। सद्विशेषप्रकाशकाद्व्यवहारतः संग्रहः समस्तसत्समूहोपदर्शकत्वाद्बहुविषयः । वर्तमानविषयादृजुसूत्राद्व्यवहारस्त्रिकालविषयावलम्बित्वादनल्पार्थः । कालादिभेदेन भिन्नार्थोपदर्शिनः शब्दादृजुसूत्रस्तद्विपरीतवेदकत्वान्महार्थः प्रतिपर्यायशब्दमर्थभेदमभीप्सतः समभिरूढाच्छब्दस्तद्विपर्ययानुयायित्वात्प्रभूतविषयः । प्रतिक्रियं विभिन्नमर्थं प्रतिजानानादेवंभूतात्समभिरूढस्तदन्यथार्थस्थापकत्वान्महागोचरः ।नयवाक्यमपि स्वविषये प्रवर्तमानं विधिप्रतिषेधाभ्यां सप्तभङ्गीमनुव्रजति । इति ॥ विशेषार्थिना नयानां नामान्वर्थविशेषलक्षणाक्षेपपरिहारादिचर्चस्तु भाष्यमहोदधिगन्धहस्तिटीकान्यायावतारादिग्रन्थेभ्यो निरीक्षणीयः ॥

प्रमाणं तु सम्यगर्थनिर्णयलक्षणं सर्वनयात्मकम् ॥ स्याच्छब्दलाञ्छितानां नयानामेव प्रमाणव्यपदेशभाक्त्वात् । तथा च श्रीविमलनाथस्तवे श्रीसमन्तभद्रः ।

नयास्तव स्यात्पदलाञ्छना इमे रसोपविद्धा इव लोहधातवः ।
भवन्त्यभिप्रेतकला यतस्ततो भवन्तमार्याः प्रणता हितैषिणः ॥

इति । तच्च द्विविधं प्रत्यक्षं परोक्षं च । तत्र प्रत्यक्षं द्विधा सांव्यवहारिकं पारमार्थिकं च । सांव्यवहारिकं द्विविधम् इन्द्रियानिन्द्रियनिमित्तभेदात् । तद् द्वितयमवग्रहेहाऽवायधारणाभेदादेकैकशश्चतुर्विकल्पम् । अवग्रहादीनां स्वरूपं सुप्रतीतत्वान्न प्रतन्यते । पारमार्थिकं पुनरुत्पत्तावात्ममात्रापेक्षम् । तद्द्विविधं क्षायोपशमिकं क्षायिकं च । आद्यमवधिमनःपर्यायभेदाद्द्विधा । क्षायिकं तु केवलज्ञानमिति । परोक्षं च स्मृतिप्रत्यभिज्ञानोहानुमानागमभेदात्पञ्चप्रकारम् । तत्र संस्कारप्रबोधसंभूतमनुभूतार्थविषयं तदित्याकारं वेदनं स्मृतिः । तत्तीर्थकरबिम्बमिति यथा । अनुभवस्मृतिहेतुकं तिर्यगूर्ध्वतासामान्यादिगोचरं संकलनात्मकं ज्ञानं प्रत्यभिज्ञानम् । यथा तज्जातीय एवायं गोपिण्डो गोसदृशो गवयः स एवायं जिनदत्त इत्यादि । उपालम्भानुपलम्भसंभवं त्रिकालीकलितसाध्यसाधनसंबन्धाद्यालम्बनमिदमस्मिन्सत्येव भवतीत्याद्याकारं संवेदनमूहाऽपरनामा तर्कः । यथा यावान्कश्चिद्धूमः स सर्वो वन्हौ सत्येव भवतीति तस्मिन्नसत्यसौ न भवत्येवेति वा । अनुमानं द्विधा स्वार्थं परार्थं च । तत्रान्यथाऽनुपपत्त्येकलक्षणहेतुग्रहणसंबन्धस्मरणकारणकं साध्यविज्ञानं स्वार्थम् । पक्षहेतुवचनात्मकं परार्थम् अनुमानमुपचारात् । आप्तवचनादाविर्भूतमर्थसंवेदनमागमः । उपचारादाप्तवचनं च । इति स्मृत्यादीनां च विशेषस्वरूपं स्याद्वादरत्नाकरात्साक्षेपपरिहारं ज्ञेयमिति । प्रमाणान्तराणां पुनरर्थापत्त्युपमानसंभवप्रातिभैतिह्यादीनामत्रैवान्तर्भावः ॥ संनिकर्षादीनां तु जडत्वादेव न प्रामाण्यम् । इति ॥ तदेवंविधेन नयप्रमाणोपन्यासेन दुर्नयमार्गस्त्वया खिलीकृतः । इति काव्यार्थः ॥

इदानीं सप्तद्वीपसमुद्रमात्रो लोक इति वावदूकानां तन्मात्रलोके परिमितानामेव सत्त्वानां संभवात् परिमितात्मवादिनां दोषदर्शनमुखेन भगवत्प्रणीतं जीवानन्त्यवादं निर्दोषतयाभिष्टुवन्नाह ।

मुक्तोपि वाभ्येतु भवं भवो वा
भवस्थशून्योस्तु मितात्मवादे ।
षड्जीवकायं त्वमनन्तसंख्य-
माख्यस्तथा नाथ यथा न दोषः ॥ २९ ॥

मितात्मवादे संख्यातानामात्मनामभ्युपगमे दूषणद्वयमुपतिष्ठते । तत्क्रमेण दर्शयति । मुक्तोपि वाभ्येतु भवमिति । मुक्तः निर्वृतिमाप्तः । सोपि वा । अपि विस्मये । वाशब्द उत्तरदोषापेक्षया समुच्चयार्थः यथा देवो वा दानवो वेति । भवमभ्येतु संसारमभ्यागच्छतु । इत्येको दोषप्रसङ्गः ॥ भवो वा भवस्थशून्योस्तु । भवः संसारः स वा भवस्थशून्यः संसारिजीवैर्विरहितः अस्तु भवतु । इति द्वितीयो दोषप्रसङ्गः ॥

इदमत्राकूतम् । यदि परिमिता एवात्मानो मन्यन्ते तदा तत्त्वज्ञानाभ्यासप्रकर्षादिक्रमेणापवर्गं गच्छत्सु तेषु संभाव्यते खलु स कश्चित्कालो यत्र तेषां सर्वेषां निर्वृतिः । कालस्यानादिनिधनत्वादात्मनां च परिमितत्वात्संसारस्य रिक्तता भवन्ती केन वार्यताम् । समुन्नीयते हि प्रतिनियतसलिलपटलपरिपूरिते सरसि पवनतपनातपनजनोदञ्चनादिना कालान्तरे रिक्तता । न चायमर्थः प्रामाणिकस्य कस्यचित्प्रसिद्धः । संसारस्य स्वरूपहानिप्रसङ्गात् । तत्स्वरूपं ह्येतद्यत्र कर्मवशवर्तिनः प्राणिनः संसरन्ति समासार्षुः संसरिष्यन्ति चेति । सर्वेषां च निर्वृतत्वे संसारस्य वा रिक्तत्वं हठादभ्युपगन्तव्यम् । मुक्तैर्वा पुनर्भवे आगन्तव्यम् । न च क्षीणकर्मणां भवाधिकारः ।

दग्धे बीजे यथात्यन्तं प्रादुर्भवति नाङ्कुरः ।
कर्मबीजे तथा दग्धे न रोहति भवाङ्कुरः ॥

इति वचनात् । आह च पतञ्जलिः । सति मूले तद्विपाको जात्यायुर्भोगा इति। एतट्टीका च। सत्सु क्लेशेषु कर्माशयो विपाकारम्भी भवति नोच्छिन्नक्लेशमूलः । यथा तुषावनद्धाः शालितण्डुला अदग्धबीजभावाः प्ररोहणसमर्था भवन्ति नापनीततुषा दग्धबीजभावा वा तथा क्लेशावनद्धः कर्माशयो विपाकप्ररोही भवति । नापनीतक्लेशो न प्रसंख्यानदग्धक्लेशबीजभावो वेति । स च विपाकस्त्रिविधो जातिरायुर्भोग इति । अक्षपादोऽप्याह । न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य इति ॥

एवं विभङ्गज्ञानिशिवराजर्षिमतानुसारिणो दूषयित्वा उत्तरार्धेन भगवदुपज्ञमपरिमितात्मवादं निर्दोषतया स्तौति । षड्जीवेत्यादि । त्वं तु हे नाथ तथा तेन प्रकारेण अनन्तसंख्यम् अनन्ताख्यसंख्याविशेषयुक्तम् षड्जीवकायम् । अजीवन् जीवन्ति जीविष्यन्ति चेति जीवाः इन्द्रियादिज्ञानादिद्रव्यभावप्राणधारणयुक्ताः तेषां संधेवानूर्ध्वे इति चिनोतेर्घञि आदेश्च कत्वे कायः समूहो जीवकायः पृथिव्यादिः । षण्णां जीवकायानां समाहारः षड्जीवकायम् । पात्रादिदर्शनान्नपुंसकत्वम् । अथ वा षण्णां जीवानां कायः प्रत्येकं संघातः षड्जीवकायः तं षड्जीवकायम् । पृथिव्यप्तेजोवायुवनस्पतित्रसलक्षणषड्जीवनिकायम् । तथा तेन प्रकारेण । आख्यः मर्यादया प्ररूपितवान् । यथा येन प्रकारेण । न दोषः दूषणमिति । जात्यपेक्षमेकवचनम् । प्रागुक्तदोषद्वयजातीया अन्येऽपि दोषा यथा न प्रादुःष्यन्ति तथा त्वं जीवानन्त्यमुपदिष्टवानित्यर्थः । आख्य इति आङ्पूर्वस्य ख्यातेरङि सिद्धिः । त्वमित्येकवचनं चेदं ज्ञापयति यज्जगद्गुरोरेवैकस्येदृक् प्ररूपणसामर्थ्यं न तीर्थान्तरशास्तॄणामिति ॥

पृथिव्यादीनां पुनर्जीवमित्थं साधनीयम् । यथा सात्मिका विद्रुमशिलादिरूपा पृथिवी छेदे समानधातूत्थानात् अर्शोऽङ्कुरवत् । भौममम्भोपि सात्मकं क्षतभूसजातीयस्य स्वभावस्य संभवात् शालूरवत् । आन्तरिक्षमपि सात्मकम् अभ्रादिविकारे स्वतः संभूय पातात् मत्स्यादिवत् । तेजोपि सात्मकम् आहारोपादानेन वृद्ध्यादिविकारोपलम्भात् पुरुषाङ्गवत् । वायुरपि सात्मकः अपरप्रेरितत्वे तिर्यग्गतिमत्त्वात् गोवत् । वनस्पतिरपि सात्मकः छेदादिभिर्म्लान्यादिदर्शनात् पुरुषाङ्गवत् । केषांचित्स्वापाङ्गनोपश्लेषादिविकाराच्च । अपकर्षतश्चैतन्याद्वा सर्वेषां सात्मकत्वसिद्धिः । आप्तवचनाच्च । त्रसेषु च कृमिपिपीलिकाभ्रमरमनुष्यादिषु न केषांचित्सात्मकत्वे विगानमिति ॥

यथा च भगवदुपज्ञे जीवानन्त्ये न दोषस्तथा दिङ्मात्रं भाव्यते। भगवन्मते हि षण्णां जीवनिकायानामेतदल्पबहुत्वम् । सर्वस्तोकास्त्रसकायिकाः । तेभ्योऽसंख्यातगुणास्तेजस्कायिकाः । तेभ्यो विशेषाधिकाः पृथिवीकायिकाः । तेभ्यो विशेषाधिका अप्कायिकाः । तेभ्योपि विशेषाधिका वायुकायिकाः । तेभ्योनन्तगुणा वनस्पतिकायिकाः । ते च व्यावहारिका अव्यावहारिकाश्च ।

गोला य असंखिज्जा असंखणिगोअ गोलओ भणिओ ।
इक्किक्कम्मि णिगोए अणन्तजीवा मुणेअव्वा ॥
सिज्झंति जत्तिया खलु इह संववहारजीवरासिओ ।
एंति अणाइवणस्सइ रासिओ तत्तिया तम्मि ॥

इति वचनात् । यावन्तश्च यतो मुक्तिं गच्छन्ति जीवास्तावन्तोऽनादिनिगोदवनस्पतिराशेस्तत्रागच्छन्ति । न च तावता तस्य काचित्परिहाणिः। निगोदजीवानन्त्यस्याक्षयत्वात्। निगोदस्वरूपं च समयसागरादवगन्तव्यम् । अनाद्यनन्तेपि काले ये केचिन्निर्वृता

निर्वान्ति निर्वास्यन्ति च ते निगोदानामनन्तभागोपि न वर्तन्ते नावर्तिषत न वर्त्स्यन्ति । ततश्च कथं मुक्तानां भवागमनप्रसङ्गः कथं च संसारस्य रिक्तताप्रसक्तिरिति । अभिप्रेतं चैतदन्ययूथ्यानामपि । यथा चोक्तं वार्तिककारेण ।

अत एव विशुध्यत्सु मुच्यमानेषु संततम् ।
ब्रह्माण्डलोकजीवानामनन्तत्वादशून्यता ॥
अन्त्यन्यूनातिरिक्तत्वैर्युज्यते परिमाणवत् ।
वस्तुन्यपरिमेये तु नूनं तेषामसंभवः ॥

इति काव्यार्थः ॥

---

अधुना परदर्शनानां परस्परविरुद्धार्थसमर्थकतया मत्सरित्वं प्रकाशयन् सर्वज्ञोपज्ञसिद्धान्तस्यान्योन्यानुगतसर्वनयमयतया मात्सर्याभावमाविर्भावयति ।

अन्योन्यपक्षप्रतिपक्षभावा-
द्यथा परे मत्सरिणः प्रवादाः ।
नयानशेषानविशेषमिच्छन्
न पक्षपाती समयस्तथा ते ॥ ३० ॥

प्रकर्षेणोद्यते प्रतिपाद्यते स्वाभ्युपगतोऽर्थो यैरिति प्रवादाः । यथा येन प्रकारेण । परे भवच्छासनादन्ये । प्रवादा दर्शनानि । मत्सरिणः अतिशायने मत्वर्थीयविधानात् सातिशयासहनताशालिनः क्रोधकषायकलुषितान्तःकरणाः सन्तः पक्षपातिन इतरपक्षतिरस्कारेण स्वकक्षीकृतपक्षव्यवस्थापनप्रवणा वर्तन्ते । कस्माद् हेतोर्मत्सरिण इत्याह । अन्योन्यपक्षप्रतिपक्षभावात् । पच्यते व्यक्तीक्रियते साध्यधर्मवैशिष्ट्येन हेत्वादिभिरिति पक्षः । कक्षीकृतधर्मप्रतिष्ठापनाय साधनोपन्यासः । तस्य प्रतिकूलः पक्षः प्रति-

पक्षः। पक्षस्य प्रतिपक्षो विरोधी पक्षः प्रतिपक्षः। तस्य भावः पक्षप्रतिपक्षभावः। अन्योन्यं परस्परं यः पक्षप्रतिपक्षभावः पक्षप्रतिपक्षत्वमन्योन्यपक्षप्रतिपक्षभावः तस्मात्। तथाहि। य एव मीमांसकानां नित्यः शब्द इति पक्षः स एव सौगतानां प्रतिपक्षः। तन्मते शब्दस्यानित्यत्वात्। य एव सौगतानामनित्यः शब्द इति पक्षः स एव मीमांसकानां प्रतिपक्षः। एवं सर्वप्रयोगेषु योज्यम्। तथा तेन प्रकारेण। ते तव। सम्यगेति गच्छति शब्दोऽर्थमनेनेति पुन्नाम्नि घः समयः संकेतः। यद्वा सम्यग् अवैपरीत्येन ईयन्ते ज्ञायन्ते जीवा जीवादयोर्था अनेन इति समयः सिद्धान्तः। अथवा सम्यगयन्ते गच्छन्ति जीवादयः पदार्थाः स्वस्मिन् रूपे प्रतिष्ठां प्राप्नुवन्त्यस्मिन्निति समय आगमः। न पक्षपाती नैकपक्षानुरागी। पक्षपातित्वस्य हि कारणं मत्सरित्वं परप्रवादेषूक्तम्। त्वत्समयस्य च मत्सरित्वाभावान्न पक्षपातित्वम्। पक्षपातित्वं हि मत्सरित्वेन व्याप्तं व्यापकं च निवर्तमानं व्याप्यमपि निवर्तयतीति मत्सरित्वे निवर्तमाने पक्षपातित्वमपि निवर्तत इति भावः। तव समय इति वाच्यवाचकभावलक्षणे संबन्धे षष्ठी। सूत्रापेक्षया गणधरकर्तृकत्वेपि समयस्यार्थापेक्षया भगवत्कर्तृकत्वाद्वाच्यवाचकभावो न विरुध्यते। अत्थं भासइ अरहा सुत्तं गंथंति गणहरा णिउणं इति वचनात्। अथवा उत्पादव्ययध्रौव्यप्रपञ्चः समयः। तेषां च भगवता साक्षान्मातृकापदरूपतयाभिधानात्। तथा चार्षम्। उप्पन्नेइवा विगमेइवा धुवेइवा इत्यदाषः॥ मत्सरित्वाभावमेव विशेषणद्वारेण समर्थयति। नयानशेषानविशेषमिच्छन् इति। अशेषान् समस्तान्नयान्नैगमादीनविशेषं निर्विशेषं यथा भवत्येवम् इच्छन् आकाङ्क्षन्। सर्वनयात्मकत्वादनेकान्तवादस्य। यथा विशकलितानां मुक्तामणीनामेकसूत्रानुस्यूतानां

हारव्यपदेश एवं पृथगभिसन्धीनां नयानां स्याद्वादलक्षणैकसूत्रप्रोतानां श्रुताख्यप्रमाणव्यपदेश इति । ननु प्रत्येकं नयानां विरुद्धत्वे कथं समुदितानां निर्विरोधिता । उच्यते । यथा हि समीचीनं मध्यस्थं न्यायनिर्णेतारमासाद्य परस्परं विवदमाना अपि वादिनो विवादाद्विरमन्ति एवं नया अन्योन्यं वैरायमाणा अपि सर्वज्ञशासनमुपेत्य स्याच्छब्दप्रयोगोपशमितविप्रतिपत्तयः सन्तः परस्परमत्यन्तं सुहृद्भूयावतिष्ठन्ते । एवं च सर्वनयात्मकत्वे भगवत्समयस्य सर्वदर्शनमयत्वमविरुद्धमेव । नयरूपत्वाद्दर्शनानाम् । न च वाच्यं तर्हि भगवत्समयस्तेषु कथं नोपलभ्यत इति । समुद्रस्य सर्वसरिन्मयत्वेऽपि विभक्तासु तास्वनुपलम्भात् । तथा च वक्तृवचनयोरैक्यमध्यवस्य श्रीसिद्धसेनदिवाकरपादाः ।

उदधाविव सर्वसिन्धवः
समुदीर्णास्त्वयि नाथ दृष्टयः ।
न च तासु भवान्प्रदृश्यते
प्रविभक्तासु सरित्स्विवोदधिः ॥

अन्ये त्वेवं व्याचक्षते । यथान्योन्यपक्षप्रतिपक्षभावात्परे प्रवादा मत्सरिणस्तथा तव समयः सर्वनयान्मध्यस्थतयाङ्गीकुर्वाणो न मत्सरी । यतः कथंभूतः । पक्षपाती पक्षमेकपक्षाभिनिवेशं पातयति तिरस्करोतीति पक्षपाती । रागस्य जीवनाशं नष्टत्वात् । अत्र च व्याख्याने मत्सरीति विधेयपदं पूर्वस्मिंश्च पक्षपातीति विशेषः । अत्र च क्लिष्टाक्लिष्टव्याख्यानविवेको विवेकिभिः स्वयं कार्यः । इति काव्यार्थः ॥

---

इत्थंकारं कतिपयपदार्थविवेचनद्वारेण स्वामिनो यथार्थवादाख्यगुणमभिष्टुत्य समग्रवचनातिशयव्यावर्णने स्वस्यासामर्थ्यं दृष्टा-

न्तपूर्वकमुपदर्शयन् औद्धत्यपरिहाराय भङ्ग्यन्तरतिरोहितं स्वाभिधानं च प्रकाशयन् निगमनमाह—

वाग्वैभवं ते निखिलं विवेक्तु-
माशास्महे चेन्महनीयमुख्य ।
लङ्घेम जङ्घालतया समुद्रं
वहेम चन्द्रद्युतिपानतृष्णाम् ॥ ३१ ॥

विभव एव वैभवम् । प्रज्ञादित्वात्स्वार्थेऽण् । विभोर्भावः कर्म चेति वा वैभवम् । वाचां वैभवं वाग्वैभवं वचनसंपत्प्रकर्षम् । विभोर्भाव इति पक्षे तु सर्वनयव्यापकत्वम् । विभुशब्दस्य व्यापकपर्यायतया रूढत्वात् । ते तव संबन्धिनं निखिलं कृत्स्नं विवेक्तुं विचारयितुं चेत् यदि वयमाशास्महे इच्छामः । हे महनीयमुख्य महनीयाः पूज्याः पञ्च परमेष्ठिनस्तेषु मुख्यः प्रधानभूतः आद्यत्वात् तस्य संबोधनम् । ननु सिद्धेभ्यो हीनगुणत्वादर्हतां कथं वागतिशयशालिनामपि तेषां मुख्यत्वम् । न च हीनगुणत्वमसिद्धम् । प्रव्रज्यावसरे सिद्धेभ्यस्तेषां नमस्कारकरणश्रवणात् । काऊण नमुक्कारं सिद्धाणमभिग्गहंतु सो गिण्हे इति श्रुतकेवलिवचनात् । मैवम् । अर्हदुपदेशेनैव सिद्धानामपि परिज्ञानात् । तथा चार्षम् । अरहन्तुवएसेण सिद्धा णज्झंति तेण अरिहाई इति । ततः सिद्धं भगवत एव मुख्यत्वम् । यदि तव वाग्वैभवं निखिलं विवेक्तुमाशास्महे ततः किमित्याह । लङ्घेम इत्यादि । तदा इत्यध्याहार्यम् । तदा जङ्घालतया जाङ्घिकतया वेगवत्तया समुद्रं लङ्घेम किल समुद्रमिव अतिक्रमामः । तथा वहेम धारयेम । चन्द्रद्युतीनां चन्द्रमरीचीनां पानं चन्द्रद्युतिपानम् । तत्र तृष्णा तर्षोऽभिलाष इति यावत् चन्द्रद्युतिपानतृष्णा ताम् ।

उभयत्रापि संभावने सप्तमी । यथा कश्चिच्चरणचङ्क्रमणवेगवत्तया यानपात्राद्यन्तरेणापि समुद्रं लङ्घितुमीहते यथा च कश्चिच्चन्द्रमरीचीरमृतमयीः श्रुत्वा चुलुकादिना पातुमिच्छति न चैतद्द्वयमपि शक्यसाधनम् तथा न्यक्षेण भवदीयवाग्वैभववर्णनाकाङ्क्षापि अशक्यारम्भप्रवृत्तितुल्या । आस्तां तावत्तावकीनवचनविभवानां सामस्त्येन विवेचनविधानं तद्विषयाकाङ्क्षापि महत्साहसमिति भावार्थः । अथवा लघि शोषणे इति धातोर्लङ्घेम शोषयेम समुद्रं जङ्घालतया अतिरहंसा । अतिक्रमणार्थलङ्घेस्तु प्रयोगे दुर्लभं परस्मैपदमनित्यं चात्मनेपदमिति । अत्र च औद्धत्यपरिहारेऽधिकृतेऽपि यदाशास्महे इत्यात्मनि बहुवचनमाचार्यः प्रयुक्तवांस्तदिति सूचयति यद्विद्यन्ते जगति मादृशा मन्दमेधसो भूयांसः स्तोतारः इति बहुवचनमात्रेण न खल्वहङ्कारः स्तोतरि प्रभौ शङ्कनीयः प्रत्युत निरभिमानताप्रासादोपरि पताकारोप एवावधारणीयः । इति काव्यार्थः ॥

---

एषु एकत्रिंशतिवृत्तेषु उपजातिच्छन्दः ॥

---

एवं विप्रतारकैः परतीर्थिकैर्व्यामोहमये तमसि निमज्जितस्य जगतोऽभ्युद्धरणेऽव्यभिचारिवचनतासाध्येनान्ययोगव्यवच्छेदेन भगवत एव सामर्थ्यं दर्शयन् तदुपास्तिविन्यस्तमानसानां पुरुषाणामौचितीचतुरतां प्रतिपादयति ।

इदं तत्त्वातत्त्वव्यतिकरकरालेऽन्धतमसे
जगन्मायाकारैरिव हतपरैर्हा विनिहतम् ।
तदुद्धर्तुं शक्तो नियतमविसंवादिवचन-
स्त्वमेवातस्त्रातस्त्वयि कृतसपर्याः कृतधियः॥ ३२॥

इदं प्रत्यक्षोपलभ्यमानं जगत् विश्वम् उपचाराज्जगद्वर्ती जनः । हतपरैः हता अधमा ये परे तीर्थान्तरीया हतपरे तैः । मायाकारैः इन्द्रजालिकैरिव शाम्बरीयप्रयोगनिपुणैरिवेति यावत् । अन्धतमसे निबिडान्धकारे । हा इति खेदे । विनिहतं विशेषेण निहितं स्थापितं पातितमित्यर्थः । अन्धं करोतीत्यन्धयति अन्धयतीत्यन्धं तच्च तत्तमश्चेत्यन्धतमसम् समवान्धात्तमसः इत्यत्प्रत्ययः तस्मिन्नन्धतमसे । कथंभूतेन्धतमसे इति द्रव्यान्धकारव्यवच्छेदार्थमाह । तत्त्वातत्त्वव्यतिकरकराले । तत्त्वं चातत्त्वं च तत्त्वातत्त्वे तयोर्व्यतिकरो व्यतिकीर्णता व्यामिश्रता स्वभावविनिमयस्तत्त्वातत्त्वव्यतिकरः तेन कराले भयङ्करे । यत्रान्धतमसे तत्त्वे अतत्त्वाभिनिवेशोअतत्त्वे च तत्त्वाभिनिवेश इत्येवंरूपो व्यतिकरः संजायत इत्यर्थः । अनेन च विशेषणेन परमार्थतो मिथ्यात्वमोहनीयमेवान्धतमसम् । तस्यैवेदृशलक्षणत्वात् । तथा च ग्रन्थान्तरे प्रस्तुतस्तुतिकारपादाः ।

अदेवे देवबुद्धिर्या गुरुधीरगुरौ च या ।
अधर्मे धर्मबुद्धिश्च मिथ्यात्वं तद्विपर्ययात् ॥

ततोयमर्थः । यथा किल ऐन्द्रजालिकास्तथाविधसुशिक्षितपरव्यामोहनकलाप्रपञ्चास्तथाविधमौषधीमन्त्रहस्तलाघवादिप्रायं किंचित्प्रयुज्य परिषज्जनं मायामये तमसि मज्जयन्ति तथा परतीर्थिकैरपि तादृक्प्रकारदुरधीतकुतर्कयुक्तीरुपदर्श्य जगदिदं व्यामोहमहान्धकारे निक्षिप्तमिति । तज्जगदुद्धर्तुं मोहमहान्धकारोपप्लवात् त्रातुं नियतं निश्चितं त्वमेव नान्यः शक्तः समर्थः । किमर्थमित्थमेकस्यैव भगवतः सामर्थ्यमुपवर्ण्यत इति विशेषणद्वारेण कारणमाह । अविसंवादिवचनः । कषच्छेदतापलक्षणपरीक्षात्रयविशुद्धत्वेन फलप्राप्तौ न विसंवदतीत्येवंशीलमविसंवादि । तथाभूतं वचनमुपदेशो यस्यासावविसंवादिवचनः । अव्यभिचारि-

वागित्यर्थः। यथा च पारमेश्वरी वाग् न विसंवादमासादयाति तथा तत्र तत्र स्याद्वादसाधने दर्शितम् । कषादिस्वरूपं चेत्थमाचक्षते प्रावचनिकाः ॥

पाणवहाईआणं पावट्ठाणाण जो उ पडिसेहो ।
झाणज्झयणाईणं जो य विही एस धम्मकसो ॥
बज्झाणुट्ठाणेणं जेण ण बाहिज्जए तयं णियमा ।
संभवइ य परिसुद्धं सो पुण धम्मम्मि छेउत्ति ॥
जीवाइभाववाओ बंधाइपसाहगो इहं तावो ।
एएहिं परिसुद्धो धम्मो धम्मत्तणमुवेइ ॥

तीर्थान्तरीयास्तु हि न प्रकृतपरीक्षात्रयविशुद्धवादिन इति ते महामोहान्धतमस एव जगत्पातयितुं समर्था न पुनस्तदुद्धर्तुम् । अतः कारणात् । कुतः कारणात् । कुमतध्वान्तार्णवान्तःपतितभुवनाभ्युद्धारणासाधारणसामर्थ्यलक्षणात् । हे त्रातः त्रिभुवनपरित्राणप्रवीण । त्वयि काक्वावधारणस्य गम्यमानत्वात् त्वय्येव विषये न देवान्तरे। कृतधियः । करोतिरत्र परिकर्मणि वर्तते यथा हस्तौ कुरु पादौ कुरु इति । कृता परिकर्मिता तत्त्वोपदेशपेशलतत्तच्छास्त्राभ्यासप्रकर्षेण संस्कृता धीर्बुद्धिर्येषां ते कृतधियः चिद्रूपाः पुरुषाः। कृतसपर्याः । प्रादिकं विनाप्यादिकर्मणो गम्यमानत्वात् । कृता कर्तुमारब्धा सपर्या सेवाविधिर्यैस्ते कृतसपर्याः । आराध्यान्तरपरित्यागेन त्वय्येव सेवाहेवाकितां परिशीलयन्ति । इति शिखरिणीच्छन्दोलङ्कृतकाव्यार्थः ॥

---

समाप्ता चेयमन्ययोगव्यवच्छेदद्वात्रिंशिकास्तवनटीका ॥

---

येषामुज्ज्वलहेतुहेतिरुचिरः प्रामाणिकाध्वस्पृशां
हेमाचार्यसमुद्भवस्तवनभूरर्थः समर्थः सखा ।
तेषां दुर्नयदस्युसंभवभयास्पृष्टात्मनां संभव-
त्यायासेन विना जिनागमपुरप्राप्तिः शिवश्रीप्रदा ॥ १ ॥
चातुर्वैद्यमहोदधेर्भगवतः श्रीहेमसूरेर्गिरां
गम्भीरार्थविलोकनं यदभवद्दृष्टिः प्रकृष्टा मम ।
द्राघीयः समयादराग्रहपराभूतप्रभूतावमं
तन्नूनं गुरुपादरेणुकणिकासिद्धाञ्जनस्योर्जितम् ॥ २ ॥
अन्यान्यशास्त्रतरुसंगतचित्तहारि-
पुष्पोपमेयकतिचिन्निचितप्रमेयैः ।
दृब्धां मयान्तिमजिनस्तुतिवृत्तिमेनां
मालामिवामलहृदो हृदये वहन्तु ॥ ३ ॥
प्रमाणसिद्धान्तविरुद्धमत्र
यत्किंचिदुक्तं मतिमान्द्यदोषात् ।
मात्सर्यमुत्सार्य तदार्यचित्ताः
प्रसादमाधाय विशोधयन्तु ॥ ४ ॥
उर्व्यामेष सुधाभुजां गुरुरिति त्रैलोक्यविस्तारिणो
यत्रेयं प्रतिभाभरादनुमितिर्निर्दम्भमुज्जृम्भते ।
किं चामी विबुधाः सुधेति वचनोद्गारं यदीयं मुदा
शंसन्तः प्रथयन्ति तामतितमां संवादमेदस्विनीम् ॥ ५ ॥
नागेन्द्रगच्छगोविन्दवक्षोलङ्कारकौस्तुभाः ।
ते विश्ववन्द्या नन्द्यासुरुदयप्रभसूरयः ॥ ६ ॥ युग्मम् ॥
श्रीमल्लिषेणसूरिभिरकारि तत्पदगगनदिनमणिभिः ।
वृत्तिरियं मनुरविमितशाकाब्दे दीपमहसि शनौ ॥ ७ ॥

श्रीजिनप्रभसूरीणां साहाय्योद्भिन्नसौरभा ।
श्रुतावुत्तंसतु सतां वृत्तिः स्याद्वादमञ्जरी ॥ ८ ॥
बिभ्राणे कलिनिर्जयाज्जिनतुलां श्रीहेमचन्द्रप्रभौ
तद्दृब्धस्तुतिवृत्तिनिर्मितिमिषाद्भक्तिर्मया विस्तृता ।
निर्णेतुं गुणदूषणे निजगिरां तन्नार्थये सज्जनां-
स्तस्यास्तत्त्वमकृत्रिमं बहुमतिः सास्त्यत्र सम्यग् यतः ॥ ९ ॥

इति श्रीटीकाकारस्य प्रशस्तिः समाप्ता ॥

---

# NOTES.



**The Maṅgalācarana** (Page 1)

The Syâdvâdamañjarî opens with a *maṅgalâcaraṇa* in four verses. The Jainas, like the Brâhmaṇas, believe in the efficacy of prayer to Higher Powers for successful execution of literary undertakings. cf. "'श्रेयांसि बहुविघ्नानि भवन्ति महतामपि। अश्रेयसि प्रवृत्तानां क्वापि यान्ति विनायकाः॥' तस्मादशेषप्रत्यूहोपशमनाय मङ्गलमभिधेयम्।......। सर्वमेव वा शास्त्रं मङ्गलं ज्ञानरूपत्वात्।......। मङ्गलशब्दनिरुक्तं च मां गालयत्यपनयति भवादिति मङ्गलम्। मा भूद्गलो विघ्नो गालो वा नाशः शास्त्रस्येति मङ्गलम्॥"—S'îlâṅkâcârya's Commentary on the Acârâṅga Sûtras.

Much intellectual energy has been spent in Brahmanical books of Logic ( Mimâṁsâ and Nyâya ) on demonstrating the necessity of maṅgalācaraṇa and on determining the manner in which it acts towards fulfilling its purpose. The duty of performing a maṅgalâcaraṇa is based upon s'iṣṭâcâra ( practice of the good and respectable ) which itself presupposes, say the Brâhmaṇas, a vedic commandment. As regards its *modus operandi*, while some hold that it brings an undertaking to a successful completion, removing obstacles if any ( समाप्ति or निर्विघ्नसमाप्ति ), others think that its function is simply to counteract the bad luck which causes obstacles (विघ्नध्वंस), the completion itself depending upon other natural or supernatural causes. Then, again, while some connect the maṅgala with the completion (समाप्ति) through the removal of obstacles ( विघ्नध्वंसस्तु मङ्गलस्य द्वारम् ), others believe that a kind of religious merit (अपूर्व) is created by the maṅgala, which removes the obstacles and produces the completion ( अपूर्वद्वारैव मङ्गलस्य समाप्तिहेतुता ). The scholiasts were not unaware of such incomplete works in Indian literature as Bâṇa's Kâdambarî despite a maṅgalâcaraṇa, and complete works even without a maṅgalâcaraṇa. Consequently, they have endeavoured to explain the breach in the causal law by

the hypothesis of mañgalâcaraṇa done in a previous life (जन्मान्तरीय मङ्गल), and also of comparative quantities and qualities of the mañgalâcaraṇa and the evil karma. ("समाप्त्यभावश्च क्वचित् प्राचीनविघ्नभूयस्त्वात् क्वचिन्मङ्गलानन्तरोत्पन्नविघ्नात् क्वचिल्लोकावगतकारणाभावात्" "अन्ये तु मङ्गलं प्रधानम् अदृष्टद्वारा आरब्धकर्मसमाप्तिः फलम्...क्वचित्तु फलाभावः कर्मादिवैकल्यात् कारीरीवत्" Tattva-Ci.) Yet, the trend of their belief in the efficacy of mañgalâcaraṇa would seem to be in the direction of rationalism. For the whole subject, see mañgalavâda in Tatt.-Ci. N. Kaustubha, N. Mañjarî, Muktâvalî, and its commentaries. ["ननु न मङ्गलं विघ्नध्वंसं प्रति न वा समाप्तिं प्रति कारणं विनापि मङ्गलं नास्तिकादीनां ग्रन्थे निर्विघ्नसमाप्तिदर्शनात् इति चेन्न अविगीतशिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वे सिद्धे तत्र फलजिज्ञासायां संभवति दृष्टफलकत्वे अदृष्टफलकल्पनाया अन्याय्यत्वात् उपस्थितत्वाच्च समाप्तिरेव फलं कल्प्यते। इत्थं च यत्र मङ्गलं न दृश्यते तत्र जन्मान्तरीयं तत्कल्प्यते यत्र च सत्यपि मङ्गले समाप्तिर्न दृश्यते तत्र बलवत्तरो विघ्नो विघ्नप्राचुर्यं वा बोध्यम्... विघ्नध्वंसस्तु मङ्गलस्य द्वारमित्याहुः प्राञ्चः। नव्यास्तु मङ्गलस्य विघ्नध्वंस एव फलं समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापात्।...नास्तिकादीनां ग्रन्थेषु जन्मान्तरीयमङ्गलजन्यदुरितध्वंसः स्वतःसिद्धविघ्नात्यन्ताभावो वाऽस्तीति न व्यभिचार इत्याहुः॥ मुक्ता० ]

The religious belief in the necessity of propitiating gods before commencing any serious piece of work—even the day's routine—is natural, and so we find that in the vedic ritual, the main sacrifice was often preceded by a small introductory offering made to the gods (cf. "आग्रावैष्णवमेकादशकपालं चरुं निर्वपेद्दर्शपूर्णमासावारिप्समानः"). Similarly, as recorded in the Bharata-Nâṭyaśâstra, a tediously long religious ceremony was performed on the stage, before commencing a dramatic representation. The ceremony which was originally mixed doing (कायिक) and speaking (वाचिक) came, in course of time, to be cut down to the latter; thus, the recitation of Nāndi remained the sole survivor of the old elaborate ceremonies of the Pûrva-rañga. Thus, the mañgalâcaraṇa in all literary works is mostly verbal:

"स्तुतिनमस्कारादिषु मङ्गलव्यवहारः शिष्टानाम्...अत एव दुरितनाशकमपि गङ्गास्नानादि न मङ्गलम्" Tatt.-Ci. Such a mañgalâcaraṇa generally

takes one of the three following forms: (i) आशीः Benediction or Prayer, (ii) नमस्क्रिया Salutation, and (iii) वस्तुनिर्देश Description, the last being supposed to be accomplished even by a bare reference to the name of a god, or the use of a word which means 'a god' as, for example, the word देवता in 'अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः,' the first line of Kâlidâsa's Kumârasambhava.

The old practice was probably the performance of maṅgalâcaraṇa *outside the work*, in the shape of the recitation of vedic mantras, of the syllable Om, or of the names of âcâryas and gurus ( *vide infra* ), and hence its apparent absence from early works. But the duty of performing a maṅgalâcaraṇa is so liberally construed by the later scholiasts, that it is supposed to have been sufficiently discharged by the use of a word like अथ—which is said to be auspicious, but which really means nothing more than 'now'—at the commencement of a work *e. g.* 'अथातो धर्मं व्याख्यास्यामः,' 'अथातो ब्रह्मजिज्ञासा' [ "अथशब्दो विघ्ननिवर्तकत्वान्मङ्गलमेव । ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ–इति स्मृतेः"—Tatt.-Ci.]

Some manuscripts of the Syâdvâdamañjarî open with 'नमः सर्वज्ञाय'—the usual mangalâcaraṇa of namaskâra to be found in Jaina and Bauddha works, the 'सर्वज्ञ' being, of course the Perfect Man, *i. e.*, the Jina or the Buddha. This may be part of the author's maṅgala, or it may be the copyist's.

**St. 1.** (Page 1 ll. 1-4)

ज्ञानमनन्तवस्तुविषयम्—knowledge of innumerable things, substances and modes, rather than of one endless Reality of the Vedântins ; for, the Jaina is a pluralist. This ज्ञान is technically known as 'केवलज्ञान' (see below). यः पूज्यते दैवतैर्नित्यम्—man, in his spiritual perfection, is higher than gods–a doctrine contributed to the history of world's religious thought by Jainism, Buddhism, and Vaiṣṇavism. दुर्नय—false doctrines or systems. कोलाहल–the jargon

arising from their mutual contradictions. रागद्वेषमुखद्विषां परिषद्—the crowd of enemies consisting of or full of passions such as राग and द्वेष. Here रागद्वेषमुखाः द्विषः may mean: (i) enemies beginning with राग and द्वेष *i. e.* all the passions; or (ii) enemies whose mouths are full of राग and द्वेषः *i. e.* the heretical schools. (cf. *infra*). वीरविभुः–The Lord Mahâvîra. For the name see Kalpasûtra, 108 : "परीसहोव सग्गाणं खंतिखमे पडिमाणं पालए धीयं अरइ रइसहे दविए वीरिअसंपन्ने देवेहि से नामं कयं समणे भगवं महावीरे"––"because he stands fast in the midst of dangers and fears, patiently bears hardships and calamities, adheres to the chosen rules of penance, is wise, indifferent to pleasure and pain, rich in control, and gifted with fortitude, the name Venerable Ascetic Mahâvîra has been given him by the gods." [Tr. S. B. E.]; also vide Hemacandra's note on Haribhadra's आवश्यकवृत्तिः "वीरं विदारयत्यष्टप्रकारं कर्म विराजते वा सबाह्याभ्यन्तरेण तपसा सूर वीर विक्रान्तौ इत्यस्य वा वीरयति कर्मशत्रून्प्रति विक्रमते इति वीरः। तदुक्तम्–विदारयति यत्कर्म तपसा च विराजते। तपोवीर्येण युक्तश्च तस्माद्वीर इति स्मृतः ॥"

**St. 2.** (Page 1 ll. 5-8)

निःसीमप्रतिभैकजीवितधरौ or °धरो—whose very life or being consists of an unbounded play of genius. प्रतिभा—intuition or quick perception. It goes with हेमचन्द्रः or सरस्वतीसुरगुरू (Sarasvatî and Bṛhaspati) according as we read धरो (रः) or °धरौ. निःशेषभूमिस्पृशां पुण्यौघेन—Owing to the mass of puṇya of all those who are born on this earth, the mortals ; that is to say, it is our good fortune that a Hemacandra was born in this world. The variant °स्पृशा पुण्यौघेन would give the sense—By the mass of puṇya which in its magnitude covers the whole earth. सरस्वतीसुरगुरू स्वाङ्गैकरूपौ दधत्—Hemacandra representing in his person both Sarasvatî and Bṛhaspati—the former the goddess of learning, and the latter the teacher of gods. स्वाङ्गैकरूपे (v.l.)—loc. sing. or acc. dual in apposition to सरस्वतीसुरगुरू. The former appears to be preferable. यः स्याद्वादमसाधयन्निजवपुर्दृष्टान्ततः who, in virtue of his being both सरस्वती and सुरगुरु, may be said to have demonstrated the Syâdvâda doctrine of Many-in-One or

One-in-Many by his own personal example. सद्बुध्यम्बुनिधि ...चन्द्रः-The sea is roused into activity by the moon ( चन्द्र ); so is good thought by हेमचन्द्र. आप्तस्तुतेः-of the Dvâtrimsikâ which is a panegyric of Mahâvîra—the आप्त. आप्त-originally a kinsman (cf. 'य आपिर्नित्यो वरुणः प्रियःसन्' Ṛg. S.) or a friend; and, hence, he who declares the Truth—'आप्तस्तु यथार्थवक्ता.' or is competent to declare the Truth. 'तत्त्वदर्शनकारुण्यकरणपाटवाभिसंबन्ध आप्तिस्तया सह वर्तत इत्याप्तः'-Vâcaspatimis'ra's योग भा. टी.

**St 4.** (Page 1 ll. 13-16)

विवृति—the present work of Malliṣeṇa—that is the Syâdvâdamañjarî. प्रसिध्यति-proves successful. आरम्भसंभावना-undertaking of the work, or the work which is respectfully undertaken ( = संभावितः आरम्भः ) यद्वा विस्मृतम्—an instance of आक्षेपालङ्कार—cf. 'निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया। वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः॥' K. Pr.

From the original stock of the Indian Religion, Jainism and Buddhism branched off as separate religions many years after the time of the great reformers Mahâvîra and Gautama Buddha; and even when eventually Brahmanism, Jainism and Buddhism stood out as rival religions in the country, they influenced each other much more profoundly than their followers cared to admit. Owing to their common origin, they possess mainly the same religious traditions including the Pantheon. The prayer to भारती here is an instance to the point. The prayer, however, is withdrawn ('यद्वा विस्मृतम्') in favour of the author's Jaina master—Udayaprabha-as quickly as the reverence which the Jainas at one time paid to the ancient Indian religion. सारस्वतः शाश्वतो मन्त्रः—The eternal mystic formula of Sarasvatî; here, the name of the author's guru—उदयप्रभ-which is to take the place of the formula. उदयप्रभ wrote आरम्भसिद्धि, धर्माभ्युदय महाकाव्य and उपदेशमालाकर्णिकावृत्ति, etc.

**Page 2.**

l. 17 दुःषमार०-The wheel of Time with its spokes (Sk. अरः, Guj. આરા ) is divided by the Jainas into two parts-अवसर्पिणी

and उत्सर्पिणी–*i. e.* the half with the *downward* move, and that with the *upward* move. The former is subdivided into six अरs *i. e.* spokes, sectors, or arcs in the descending order of happiness: 1. सुषम-सुषमा ( the period of extreme happiness, ) 2 सुषमा ( the period of happiness ), 3 सुषम-दुःषमा ( the period of mixed happiness and misery, the former preponderating ), 4 दुःषमसुषमा ( the period of mixed misery and happiness, the former preponderating ), 5 दुःषमा ( the period of misery ) and 6 दुःषमदुःषमा ( the period of extreme misery ). The first Tîrthaṅkara–Ṛṣabhadeva–was born during the 3rd and the remaining twenty-three during the 4th period. Ours is the 5th. The same divisions in the reverse order belong to the other half, *viz.*, उत्सर्पिणी. For a detailed account of their characteristics see Mrs. Stevenson's "The Heart of Jainism" pp. 272–278. "The main features of the chronological system of the Gainas equally differ from those of the Buddhists as from those of the Brâhmaṇas. For it is impossible to derive the Utsarpiṇî and Avasarpiṇî eras, with their six Aras, from the Buddhistical four great and eighty smaller Kalpas, which are as it were the acts and scenes in the drama of the successive creations and dissolutions of the universe, nor from the Yugas and Kalpas of the Brâhmaṇas. I am of opinion that the Buddhists have improved on the Brahmanic system of the Yugas, while the Gainas inverted their Utsarpiṇî and Avasarpiṇî eras after the model of the day and night of Brahmā."—Jacobi, S. B. E. Gaina Sûtras, Pt. I p. xxii.

"स च कालो द्विविधः। उत्सर्पिणी अवसर्पिणी चेति। तद्भेदाः प्रत्येकं षट्। अन्वर्थसंज्ञे चैते। अनुभवादिभिरुत्सर्पणशीला उत्सार्पिणी। तैरेवावसर्पणशीला अवसर्पिणी। तत्रावसर्पिणी षड्विधा। सुषमसुषमा, सुषमा, सुषमदुष्षमा, दुष्षमसुषमा, दुष्षमा अतिदुष्षमा। उत्सर्पिण्यपि अतिदुःषमाद्या सुषमसुषमान्ता षड्विधैव भवति।"–Āv. Tîkâ.

"द्वादशारं कालचक्रं हेतुः कालव्यवस्थितेः। कालो द्विविधोऽवसर्पिण्युत्सर्पिणी विभेदतः। अराः षडवसर्पिण्यामेकान्तसुखमादयः। तत्रैकान्तः सुखमारः चतस्रः कोटिकोटयः। सागराणां सुषमा तु तिस्रस्तत्कोटिकोटयः। सुषमदुःषमा ते द्वे दुःखमसु-

षमा पुनः। सैका सहस्रैर्वर्षाणां द्विचत्वारिंशतो मिता । एकविंशतिरब्दानां सहस्राणि तु दुःखमा । एकान्तदुःखमापि स्यात्तावद्वर्षप्रमाणिका । अरका अवसर्पिण्यां य एते समुदीरिताः। उत्सर्पिण्यां त एव स्युः प्रतिलोमक्रमेण तु। तदेवमवसर्पिण्या-मुत्सर्पिण्यां च मीलिताः। सागरोपमकोटीनां कोटयः खलु विंशतिः।" Hem.-आदीश्वरचरित Sarga II, Verses 111, etc.

l. 18 वसुधातलावतीर्ण etc.-सुधासारणी-a canal or stream of nectar. A canal near Mângrol in Kâthiavad is known by the proper name of Sâraṇ. सुधासारिणी (a. v. l.), streaming with nectar, causing nectar to flow. देश्यदेशनावितान-Spreading of the gospel of Jainism among his pupils or those who are prepared or fit to hear it.

परमार्हतीकृत०-For Kumârapâla's conversion to Jainism, and the stories of his enthusiasm for the new faith, see Dvyâśraya Kumârapâlacarita of Hemacandra Prabandha-cintâmaṇi, Pt. iv, pp. 132-133 Tawney's Edition, A. S. B. Râsamâlâ vol. I pp. 182-192, & 194-197, the Bombay Gazetteer, Gujarat pp. 190-193. "The King and the monk [Hemâcârya] returned to Unhilpoor. There Hemâcârya instructed Kumâra Pâl in the purity which proceeded from the mouth of Jin Dev, and caused him to become great among the followers of Urhant. Under the Âcâryâ's directions, the King forbad the destruction of life for a period of fourteen years in the eighteen countries of Goozerat, in which his order was obeyed." (Râsmâlâ vol. I pp. 187-188.) The order is known by the name of 'अमारिघोषणा' or proclamation prohibiting slaughter.

l. 21 चातुर्विद्य—Explained in a marginal note in some of the manuscripts as 'लक्षणागमसाहित्यतर्कोश्चातुर्विद्यम्' *i. e.* Grammar, Sacred Canon (Jaina), Literature and Logic. This nearly accords with the four subjects in which Mukulabhaṭṭa (ix century A. D.), the teacher of प्रतीहारेन्दुराज (9th century) is said to have been versed, *viz.*, मीमांसा, व्याकरण, तर्क and साहित्य. In several Gujarat inscriptions, however, the word चातुर्विद्य occurs in the sense of the four Vedas. ( see Fleet's Inscriptions.)

l. 22. जगत्प्रसिद्धश्रीसिद्धसेनदिवाकर etc.–Siddhasena Divâkara (for his date and other account see H.J. pp. 76–77) composed 32 sets of 32 stanzas each. Similarly Hemacandra composed two such sets called अयोगव्यवच्छेद० and अन्ययोगव्यवच्छेद—द्वात्रिंशिकाs, the former being a *defence* of the Jaina system, and the latter an *attack* on other systems. (cf. similarly, Pâdas i and ii of the Adhyâya II of the Brahmasûtras. The words are of common occurrence in these senses and the method the common method of scholastic treatment. cf. "यथोक्तस्योभयस्य मार्गत्वं द्रढयितुमयोगव्यावृत्ति-मन्ययोगव्यावृत्तिं च विधत्ते...तमेवानतिक्रमं स्वपक्षसाधनपरपक्षदूषणाभ्यां द्रढयति "—Sâyaṇa's com. on Aitareya Brâhmaṇa ).

l. 23 (1) अयोगव्यवच्छेद lit. exclusion of non-possession, *i. e.* demonstration that truth does not fail to belong to the Jaina system, *that it certainly belongs to it*: the *constructive* or *positive* part of Hemacandra's work ( स्वपक्षसाधन ). (2) अन्ययोगव्यवच्छेद—lit. exclusion of the position that truth might belong to other rival systems, *i. e.* demonstration that truth does *not* belong to other systems: the *destructive* or *negative* part of the undertaking (परपक्षदूषण). *Thirty-two* seems to have been a favourite number with Hemacandra. He got thirty-two Vihâras or Jaina monasteries built by Kumârapâla in expiation of the sin the latter had committed by eating a certain dish which reminded him of flesh. The reason given for the number was that man had thirty-two teeth. see Prabandha-cintâmaṇi ch. iv: "पृथ्वीपतिः......पूर्वभक्षितस्याभक्ष्यस्य प्रायश्चित्तं याचितवान् । द्वात्रिंशद्दशनसंख्यया द्वात्रिंशद्विहारान् कारयेति । "

l. 26. निःशेषदुर्वादिपर्षद० ( *i. e.* परिषद् )—An assembly or assemblage of all the heretical *i. e.* non-Jaina philosophers. पर्षद्–evidently a contraction of परिषद्–is as old as the Sûtrâs and the Smṛitis and even older. ( cf. supra रागद्वेषमुखद्विषां च परिषत् क्षिप्ता क्षणाद् येन ).

---

**Stanza I.**

ll. 29-30 अनन्तम्=अप्रतिपाति, unlimited, unfailing; विज्ञानम्=विशिष्टं सर्वद्रव्यपर्यायविषयत्वेनोत्कृष्टं ज्ञानं केवलाख्यम्, that extraordinary kind

संभावनाभयेन महेशितुरेकत्वकल्पना भोजनादिव्ययभयात् कृपणस्यात्यन्तवल्लभपुत्रकलत्रमित्रादिपरित्यजनेन शून्यारण्यानीसेवनतुलामाकलयति। अनेककीटिकासरघाशतसंपाद्यत्वेऽपि शक्रमूर्धमधुच्छत्रादिकार्याणामेकरूपतया विगानेनोपलम्भात्। किं चेश्वरस्याखिलजगत्कर्तृत्वेऽभ्युपगम्यमाने शास्त्राणां प्रमाणेतरताव्यवस्थाविलोपः स्यात्। तथा हि। सर्वं शास्त्रं प्रमाणमीश्वरप्रणीतत्वादितरप्रणीतशास्त्रवत् प्रतिवाद्यादिव्यवस्थाविलोपश्च सर्वेषामीश्वरादेशविधायित्वेन तत्प्रतिलोमाचरणानुपपत्तेः प्रतिवाद्यभावप्रसङ्गात्। इति न सृष्टिकरस्य महेश्वरस्य कथंचिदपि सिद्धिः। ततः सद्भूतार्थप्रकाशकत्वाद्वीतराग एव सर्वज्ञो देवो देवत्वेनाभ्युपगमनार्हो नापरः कश्चिदिति स्थितम्॥ Guṇaratna's Com. on षड्०, pp. 115-124.

4.

यत्प्रमाणं सर्वं धरणिधरणीधरतरुपुरप्राकारादिकं बुद्धिमत्पूर्वकं कार्यत्वात् यद्यत् कार्यं तत्तद्बुद्धिमत्पूर्वकं यथा घटः कार्यं चेदं तस्माद्बुद्धिमत्पूर्वकमिति प्रयोगः। स भगवानीश्वर एवेत्यर्थः। व्यतिरेके गगनम्। न चायमसिद्धो हेतुः। भूभूधरादीनां स्वकारणकलापजन्यत्वेनावयवितया वा कार्यत्वस्य जगत्प्रसिद्धत्वात्। नापि विरुद्धानैकान्तिकदोषौ। विपक्षादत्यन्तव्यावृत्तत्वात्। नापि कालात्ययापदिष्टः। प्रत्यक्षानुमानोपमानागमाबाध्यमानधर्मधर्मित्वात्। नापि प्रकरणसमः। तत्परिपन्थिपदार्थस्वरूपसमर्थनप्रथितप्रत्यनुमानोदयाभावात्। अथ निर्वृतात्मशरीरत्वादेव न संभवति सृष्टिसंहारकर्तेश्वर इति प्रत्यनुमानोदयात् कथं प्रकरणसमदूषणाभाव इति चेत्। उच्यते। अत्र साध्यमान ईश्वररूपो धर्मी प्रतीतोऽप्रतीतो वानुमन्यते सुहृदा। अप्रतीतश्चेद्भवत्परिकल्पितहेतोरेवाश्रयासिद्धिदोषप्रसङ्गः। प्रतीतश्चेत्तर्हि येनैव प्रमाणेन प्रतीतस्तेनैव स्वयमुद्भावितस्वतनुरपि किमर्थं नाभ्युपगम्यते इति कथमशरीरत्वम्। अतो न दुष्टो हेतुरिति साधूक्तं सृष्टिसंहारकृच्छिवः। तथा विभुः सर्वव्यापकः। एकनियतस्थानस्थितस्य त्रिभुवनान्तर्वर्तिपदार्थानां यथावन्निर्माणानुपपत्तेः। न ह्येकस्थानस्थित· कुम्भकारोऽपि दूरदूरतरघटघटनायां व्याप्रियते। तस्माद्विभुर्भगवान्। तथा नित्यैकः। नित्यश्चासावेकश्चेति यतो नित्योतऽएव एकः। अप्रच्युतानुत्पन्नस्थिरैकरूपं नित्यम्। भगवतो ह्यनित्यत्वे पराधीनोत्पत्तिसव्यपेक्षतया कृतकत्वप्राप्तिः। स्वोत्पत्तावपेक्षितपरव्यापारो हि भावः कृतक इष्यते इति। अथ चेत्कश्चिज्जगत्कर्तारमपरमभिदधाति स एवानुयुज्यते। सोऽपि नित्योऽनित्यो वा। नित्यश्चेदधिकृतेश्वरेण किमपराद्धम्। अनित्यश्चेत्तस्याप्यन्येनोत्पादकान्तरेण भाव्यमनित्यत्वादेव तस्याप्यन्येनेति नित्यानित्यवादविकल्पशिल्पशतस्वीकारे कल्पान्तेऽपि न जल्पसमाप्तिः। तस्मान्नित्य एव भगवान्। अन्यच्चैकोऽद्वितीयः बहूनां हि जगत्कर्तृत्वस्वीकारे परस्परं पृथक् पृथगन्योन्यसदृशमतिव्यापारतयैकैकपदार्थस्य विसदृशनिर्माणे सर्वमसमञ्जसमापद्येतेति भगवानेक एवेति युक्तियुक्तं नित्यैकेतिविशेषणम्। तथा सर्वज्ञ इति सर्वपदार्थानां सर्वविशेषज्ञाता। सर्वज्ञत्वाभावे हि विधित्सितपदार्थोपयोगयोग्यजगत्प्रसृमरविप्रकीर्णपरमाणुकणप्रचयसम्यक्सामग्रीमीलनाक्षमतया याथातथ्येन पदार्थनिर्माण-

रचना दुर्घटा। सर्वज्ञश्च सन् सकलप्राणिनां संमीलितसमुचितकारणकलापानुरूपपरिमाणडल्यानुसारेण कार्यवस्तु निर्मिमाणः स्वार्जितपुण्यपापानुमानेन च स्वर्गनरकयोः सुखदुःखोपभोगं ददानः केषां नाभिमतः। तथा चोक्तम्—

ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा।
अन्यो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः॥ इति Maṇibhadra's Com. on षड्., pp. 12-13.

5.

यदुक्तम्—तनुभुवनकरणादिकं विमत्याधिकरणभावापन्नं विशिष्टबुद्धिमत्कारणपूर्वकं कार्यत्वाद् घटवदिति तदयुक्तम्। तथाविधविशिष्टकारणपूर्वकत्वेन व्याप्त्यसिद्धेः। कारणपूर्वकत्वमात्रेण तु कार्यं व्याप्तं कार्यविशेषोपलब्धौ कारणविशेषप्रतिपत्तिर्गृहीतप्रतिबन्धस्यैव भवति। न चात्यन्तादृष्टे तथा प्रतीतिर्भवति। घटे तत्पूर्वकत्वं प्रतिपन्नमिति चेत् युक्तं तत्र घटस्य कार्यविशेषत्वप्रतिपत्तेः। न त्वेवं सरित्समुद्रपर्वतादौ बुद्धिमत्कारणपूर्वकत्वेन संबन्धो गृहीत इति। नन्वत एव घटसंस्थानविशेषदर्शनवत्पर्वतादावपि विशिष्टसंस्थानदर्शनाद् बुद्धिमत्कारणपूर्वकत्वस्य साधनं क्रियते। नैतदेवं युक्तम्। यतो न हि संस्थानशब्दप्रवृत्तिमात्रेण सर्वस्य बुद्धिमत्कारणपूर्वकत्वावगतिर्भवति। यदि तु स्यात् मृद्विकारत्वाद्वल्मीकस्यापि घटवत् कुम्भकारकृतिः स्यात्। तथा चोक्तम्—"अन्यथा कुम्भकारेण मृद्विकारस्य कस्यचित्। घटादेः करणात् सिध्येद्वल्मीकस्यापि तत्कृतिः" ॥ इति। तदेवं यस्यैव संस्थानविशेषस्य बुद्धिमत्कारणपूर्वकत्वेन संबन्धो गृहीतस्तद्दर्शनमेव तथाविधकारणानुमापकं भवति न संस्थानमात्रमिति। Sûtrakṛtâṅga Com., I. iii., pp. 43-44.

6.

अत्राहुः—सावयवत्वादेव जगतः कार्यत्वं न प्रत्याख्यातुं शक्यते। भवन्ति च प्रयोगाः। विवादाध्यासितं भूभूधरादि कार्यं सावयवत्वात् घटादिवत्। तथा विवादाध्यासितमवनिजलधिमहीधरादि कार्यं महत्त्वे सति क्रियावत्त्वात् घटवत्। तनुभुवनादि कार्यं महत्त्वे सति मूर्तत्वात् घटवत् इति। सावयवेषु द्रव्येषु इदमेव क्रियते नान्यत् इति कार्यत्वस्य नियामकं सावयवत्वातिरेकरूपान्तरं नोपलभामहे। कार्यत्वप्रतिनियतं शक्यक्रियत्वं शक्योपादानादिविज्ञानत्वं चोपलभ्यत इति चेत् न कार्यत्वेनानुमितेऽपि विषये ज्ञानशक्ती कार्यानुमेये इत्यन्यत्रापि सावयवत्वादिना कार्यत्वं ज्ञातमिति ते च प्रतिपन्ने एवेति न कश्चिद्विशेषः। तथा हि घटमणिकादिषु कृतेषु कार्यदर्शनानुमितकर्तृगततन्निर्माणशक्तिज्ञानः पुरुषोऽदृष्टपूर्वं विचित्रसंनिवेशं नरेन्द्रभवनमालोक्यावयवसंनिवेशविशेषेण तस्य कार्यत्वं निश्चित्य तदानीमेव कर्तुस्तज्ज्ञानशक्तिवैचित्र्यमनुमिनोति। अतस्तनुभुवनादेः कार्यत्वे सिद्धे सर्वसाक्षात्कारतन्निर्माणादिनिपुणः कश्चित् पुरुषविशेषः सिध्यत्येव............

कुलालादीनां दण्डचक्राद्यधिष्ठानं शरीरद्वारेणैव दृष्टमिति जगदुपादानोपकरणाधिष्ठानमीश्वरस्याशरीरस्यानुपपन्नमिति चेत्। न। संकल्पमात्रेणैव परशरीरगतभूतवे-

तालगरलाद्यपगमविनाशदर्शनात्। कथमशरीरस्य परप्रवर्तनरूपः संकल्प इति चेत्। न शरीरापेक्षः संकल्पः शरीरस्य संकल्पहेतुत्वाभावात्। मन एव हि संकल्पहेतुः! तदभ्युपगतमीश्वरेऽपि कार्यत्वेनैव ज्ञानशक्तिवन्मनसोऽपि प्राप्तत्वात्। मानसः संकल्पः सशरीरस्यैव समनस्कत्वादिति चेत् न। मनसो नित्यत्वेन देहापगमेऽपि मनसः सद्भावेनानैकान्त्यात्। अतो विचित्रावयवसंनिवेशविशेषतनुभुवनादिकार्यनिर्माणे पुण्यपापपरवशः परिमितशक्तिज्ञानः क्षेत्रज्ञोऽपि प्रभवतीति निखिलभुवननिर्माणचतुरोऽचिन्त्यापरिमितज्ञानशक्त्यैश्वर्योऽशरीरः संकल्पमात्रसाधनं परिनिष्पन्नानन्तविस्तारविचित्ररचनप्रपञ्चः पुरुषविशेष ईश्वरोऽनुमानेनैव सिध्यति।

यदुक्तं सावयवत्वादिना कार्यं सर्वं जगत् कार्यं च तदुचितकर्तृविशेषपूर्वकं दृष्टमिति निखिलजगन्निर्माणतदुपादानोपकरणवेदनचतुरः कश्चिदनुमेय इति। तदयुक्तम्। महीमहार्णवादीनां कार्यत्वेऽप्येकदैवैकेन निर्मिता इत्यत्र प्रमाणाभावात्। न चैकस्य घटस्येव सर्वेषामेकं कार्यत्वम्। येनैकदैवैकः कर्ता स्यात्। पृथग्भूतेषु कार्येषु कालभेदकर्तृभेददर्शनेन कर्तृकालैक्यनियमादर्शनात्।......

भवन्ति च प्रयोगाः—तनुभुवनादि क्षेत्रज्ञकर्तृकम् कार्यत्वात् घटवत्। ईश्वरः कर्ता न भवति प्रयोजनशून्यत्वात् मुक्तात्मवत्। ईश्वरः कर्ता न भवति अशरीरत्वात्तद्वदेव। न च क्षेत्रज्ञानां स्वशरीराधिष्ठाने व्यभिचारः। तत्राप्यनादेः सूक्ष्मशरीरस्य सद्भावात्। विमतिविषयः कालो न लोकशून्यः कालत्वाद्वर्तमानकालवत् इति।

अपि च किमीश्वरः सशरीरोऽशरीरो वा कार्यं करोति। न तावदशरीरः अशरीरस्य कर्तृत्वानुपलब्धेः। मानसान्यपि कार्याणि सशरीरस्यैव भवन्ति। मनसो नित्यत्वेऽप्यशरीरेषु मुक्तेषु तत्कार्यादर्शनात्। नापि सशरीरः विकल्पासहत्वात्। नापि सशरीरः विकल्पासहत्वात्। तच्छरीरं किं नित्यम् उतानित्यम्। न तावन्नित्यम्। सावयवस्य तस्य नित्यत्वे जगतोऽपि नित्यत्वाविरोधादीश्वरासिद्धेः। नाप्यनित्यम्। तद्व्यतिरिक्तस्य तच्छरीरहेतोस्तदानीमभावात्। स्वयमेव हेतुरिति चेत्। न अशरीरस्य तदयोगात्। अन्येन शरीरेण सशरीर इति चेत्। न। अनवस्थानात्। स किं सव्यापारो निर्व्यापारो वा। अशरीरत्वादेव न सव्यापारः। नापि निर्व्यापारः कार्यं करोति मुक्तात्मवत्। कार्यं जगदिच्छामात्रव्यापारकर्तृकमित्युच्यमाने पक्षस्याप्रसिद्धविशेषणत्वात्। दृष्टान्तस्य च साध्यहीनता। अतो दर्शनानुगुण्येन ईश्वरानुमानं दर्शनानुगुण्यपराहतम् इति शास्त्रैकप्रमाणकः परब्रह्मभूतः सर्वेश्वरः पुरुषोत्तमः॥ Râm. S'rî-Bhâṣya, I.i. 3, pp.133-37 (Vâṇî. Ed.)

---

## Stanza VII.

Another doctrine of the Vaiśeṣika school which is next criticized is the *Doctrine of Samavâya.*

*Stanza VII*: If there be an *absolute* distinction between धर्म and धर्मिन्, there can be no such relation as that of धर्म and धर्मिन्. If you say that the relation is due to समवाय (='वृत्ति' = inherence or residence), we would point out that three realities—1 धर्म, 2 धर्मिन् *and* 3 समवाय—are not perceived, but only two, viz., the first and the second. If it be contended that the experience 'this पट is *in* the तन्तुs' bears testimony to the residence—'Vṛtti' (Samavâya)—of the former in the latter, please note that the line of argument will carry you too far, requiring you to recognize a समवाय in a समवाय, and so on *ad infinitum.* If, to meet this difficulty, you draw a distinction between the two समवायs, saying that while one is primary the other is secondary, all that we need say is—the distinction is imaginary. Moreover, it is contrary to common experience to say that the पट is *in* the तन्तुs.

**Page 31.**

l. 4. धर्मधर्मिणोः etc.—'इव' in 'अतीव' is a rhetorical appendage of अति, having no particular meaning of its own. It is sometimes used after 'किम्' as in the two passages cited in the text. The first is from Kumâra. iii, 54, and the second from S'is'upâla.viii, 18.

l. 7. ततश्चैकान्त etc.—एकान्त-absolute; a synonym of the word 'अतीव' of the Stanza. The Jaina does not deny the distinction *in a certain sense* between धर्म and धर्मिन्; what he denies is *absolute* distinction between them. Compare the view of the S'âṁkara Vedântin who affirms the identity (तादात्म्य) of the two, and while recognizing some distinction denies that it has any *real* existence, the धर्म and the संबन्ध being looked upon as unreal (मिथ्या, अनिर्वचनीय) appearances or aspects of the one Absolute Reality. (See S'âṁkara-Bhâṣya on Br. Sûtra II. ii. 13, and Advaitabrahmasiddhi, on समवाय).

l. 8. अस्य धर्मिणः etc.—The fact that we *relate* them is a disproof of their *absolute* distinction—an argument well-known in Neo-Hegelianism. Were they absolutely distinct, we could not so much as say that a particular धर्म belonged to धर्मिन् A; for, so far as distinction was concerned, it would be in the same position with respect to the धर्मिन् as that occupied by the धर्म of any other object with respect to the said धर्मिन्. In other words, the धर्म would be a total stranger to the particular धर्मिन्, and would be in no way *its*. Thus, A (dravya) and A′ (its guṇa) would be *absolutely* distinct, just as A (the dravya) and B′ (guṇa of another dravya) are absolutely distinct—there being no difference between the position of A′ (the first guṇa) and B′ (the second guṇa) with respect to A (the first dravya), on the hypothesis of absolute distinction.

l. 11. एवमुक्ते सति etc.—'वृत्त्यास्ति'—A possible defence of the Vais'eṣika position.

l. 12. अयुतसिद्धानामाधारा० etc.—'समवाय,' or 'वृत्ति' as it is called in the stanza, owing to the residence (वृत्ति) of one thing in the other—is defined as "अयुतसिद्धानामाधार्याधारभूतानामिहप्रत्यय-हेतुः संबन्धः" (The definition is taken from Praśasta. Bh. section on समवाय p. 324. Viz. ed.) Of things indissolubly connected as आधार and आधेय we say 'Here is A (आधेय) *residing in* B (आधार)'. This perception of the residential connection (वृत्ति) of A with B is evidence of समवाय. 'अयुत-सिद्ध'—roughly, indissolubles—are thus described: "ययोर्द्वयोर्मध्य एकमविनश्यदपराश्रितमेवावतिष्ठते तौ द्वौ अयुतसिद्धौ"—अयुतसिद्धयोः संबन्धः= 'अवयवावयविनोः, गुणगुणिनोः, क्रियाक्रियावतोः, जातिव्यक्तयोः, नित्यद्रव्य-विशेषयोः' संबन्धः (Tarkabhâṣâ).

l. 13. 'समवाय,' so-called because it weaves or strings *together* ('समवयनात्') dravya and guṇa. It is also called 'वृत्ति', because it causes गुण etc. to reside (वर्तनात्) in द्रव्य.

**Page 32.**

l. 15. विनिर्लुण्ठित = separate.

ll. 16-23.–अत्राचार्यैः समाधत्ते etc.—Hemacandra's reply to the Vaiśeṣika's vindication of समवाय is that it is unwarranted by

प्रत्यक्ष. There is no प्रत्यक्ष of धर्म, धर्मिन् *and* समवाय. No doubt we see two separate stones rivetted together by lac ( राला ), but we do not see धर्म and धर्मिन् so rivetted together by a *third* thing corresponding to the lac in the analogy.

ll. 23-29.–किंचायं etc.—Besides, the समवाय is said to be 'एको नित्यः सर्वव्यापको नित्यश्च'—which would make the धर्मs of घट reside in पट quite as well as in घट ! For, the two समवायs (घटधर्मसमवाय and पटधर्मसमवाय ) are, as you hold, but "*one, eternal, omnipresent* and *incorporeal*" and therefore in touch with everything simultaneously, like आकाश. Moreover, when घट perishes its समवाय will be no more ( it *must* be no more; for, how can it exist without the घट to which it belongs ?), and as there is but *one* समवाय in the universe, and the one has perished, a घटसमवाय becomes impossible thereafter !

ll. 29-30–तत्तदवच्छेदक etc.—The Vaiśeṣika endeavours to explain the position by the hypothesis of different अवच्छेदकs (limiting circumstances, the media in which the अवच्छेद्य reveals itself) belonging to one समवाय. Thus, समवाय is but one; but घटसमवाय, पटसमवाय, etc. are different in consequence of the different अवच्छेदकs of the समवाय viz. घट, पट, etc., which are the limiting conditions or media in which the समवाय manifests itself. To this Malliṣeṇa replies: एवमनित्यतापत्तिः—This is virtually admitting the plurality of समवायs and their perishableness along with घट, पट etc. It may be noted that later Vaiśeṣikas and Naiyâyikas have abandoned the creed of a single, eternal समवाय—which is admitted by them to be many ( नाना ) and perishable (अनित्य). The reason for the earlier logicians holding the doctrine of one समवाय probably was this–that they found it absurd to associate the quality of *number* with समवाय—number itself being a guṇa which was connected with dravyas by समवाय, and so when they spoke of *one* समवाय all that they meant was that they could not predicate number of it. Similarly I think when they say दिक् is everywhere ( विभ्वी ), what they should mean is that there is no limitation of space to it. So about कालो नित्यः.

ll. 30-35.–अथ कथं etc.—The existence of समवाय is not a matter of faith, but is evidenced by the sensuous experience 'इह तन्तुषु पटः' according to the old school of Nyâya, and, I believe, of Vaiśeṣika also. According to the recognised school of the Vaiśeṣikas represented by Pras'astapâda, and also according to the later Naiyâyikas, however, समवाय is अनुमेय—See Muktâvalî on St. XI. and Dinakarî on the same. It was only fair that the Naiyâyikas should admit this and change the old dogma, in deference to the voice of a large number of opponents all ready to swear that they never *perceived* any such thing as समवाय.

ll. 35-38.–इहेदमिति etc.—Construe thus: इहेदमिति वृत्तौ च (=अपि) मतिः—' च '=अपि though placed after मतिः in the stanza is to be construed with वृत्तौ. Just as the आश्रयाश्रयिभाव in इहेदम् *i. e.* इह तन्तुषु पटः implies, according to you, समवाय (=वृत्ति) relation, so, to be consistent, you should hold the same with regard to the समवाय itself. The point is made clear in the passage beginning with "इदमत्र हृदयम्" (P. 33).

ll. 30-35.–अथ कथं समवायस्य न ज्ञाने प्रतिभासनं etc.—How do you say that there is no such awareness of समवाय? For, we are distinctly aware of it when we say that पट is *in* the तन्तुs, or that ज्ञान is *in* the आत्मन् or that रूप is *in* the घट. Here we are conscious not of the धर्म and धर्मिन् only, but also of the residence of the one in the other. Such is the argument of the Vaiśeṣika in favour of समवाय. It is answered in the following lines.

**Page 33.**

ll. 38-49–इदमत्र हृदयम् etc.—Just as you say पृथ्वीत्वाभिसंबन्धात् पृथ्वी and add that here पृथ्वीत्व is but the स्वरूप or अस्तित्व of पृथ्वी and is not a separate entity, and that the connection of पृथ्वी with पृथ्वीत्व is समवाय, why can we not say समवायत्वाभिसंबन्धात् समवायः, and add that समवायत्व is the स्वरूप of समवाय, and then the connection of समवाय with its स्वरूप, viz., समवायत्व would be another समवाय and so on *ad infinitum*? cf. "समवायस्य समवायान्तरेण वृत्त्यभ्युपगमे तु तत्राप्यपरसमवायकल्पनेऽनवस्थानदी दुस्तरा"—Guṇaratna, p. 252. If समवाय had not the स्वरूपसमवायत्व it would be *nothing*, no better than a शशविषाण which is

निःस्वरूप. 'प्राप्तानामेव प्राप्तिः समवायः'—Contra, 'अप्राप्तानां प्राप्तिः संयोगः'. Difference between संयोग and समवाय—the former joins things that were not joined before; the latter joins things that are already joined *i. e.* it is the name of a relation to explain a relatedness which has been already there.

ll. 50-55.–ननु पृथिव्यादीनां etc.—A distinction is drawn by the Vaiśeṣika between the case of पृथ्वीत्व and that of the alleged समवायत्व. The former is a real °त्व and a सामान्य which embraces all the व्यक्तिs *i.e.* individual पृथ्वीs within it, and so the समवाय which connects it with the व्यक्तिs is a 'मुख्य समवाय' *i. e.* समवाय in the primary and real sense of the term, whereas समवाय being but one व्यक्ति, समवायत्व is not a real सामान्य, and therefore its existence in समवाय, and the second समवाय by which it would be expected to exist in it, will be both अमुख्य or गौण *i.e.* secondary and unreal. The distinction between मुख्य and गौण is pointed out *infra* p. 34. ll. 63-64.–तल्लक्षणं चेत्थं etc.

तदेतन्न चेतश्चमत्कार° etc.—The fine distinction which the Vaiśeṣika has drawn between the two cases is unfounded. You say that when there is but one व्यक्ति, as in the case of समवाय, there can be no real जाति or सामान्य. (See Udayanâcârya's famous Kârikâ: "व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः । रूपहानिरसंबन्धो जातिबाधकसंग्रहः" This will be explained below in Note on St. VIII. ll. 74–75.) But we answer: Where is 'व्यक्तेरभेदः' (only a single individual) in the case of समवाय which would preclude the possibility of जाति or universal? There is a घटसमवाय, there is a पटसमवाय, and so are innumerable समवायs which would require a °त्व quite as much as पृथ्वी. (Recall the admission of the new school of Nyâya noted above in Note on ll. 29-30).

**Page 34.**

ll. 64-66.–तल्लक्षणं चेत्थं etc.—Distinction between मुख्य and गौण: "मुख्य is that which is invariable; also, complete, characteristic and inner; गौण is the opposite of this."

ll. 67-68.–तस्माद्धर्म etc.—So it is a false distinction to draw that the समवाय which joins धर्म and धर्मिन् is मुख्य, while that which joins समवायत्व with the original समवाय is गौण. "न गौणभेदः" of the Stanza.

l. 73.–अपि च लोकबाधः etc.—Even the man in the street says 'इह पटे तन्तवः'—'there are so many threads in this piece of cloth;' nobody says 'the cloth is in the threads.' So the Vais'eṣika argument of 'इह तन्तुषु पटः' breaks down.

पांशुलपाद—he who walks barefooted on the road and has dusty feet; hence, 'the man in the street;' cf. "पांसुलपादानामपीह पटे तन्तव इत्येवं प्रतीतिदर्शनात्"–Guṇaratna, p. 252. See below Appendix 3.

References: For the Vaiśeṣika case see Vaiś. Sûtras, Praśastapâda's Bhâṣya, Nyâyakandalî, Vaiśeṣika Sûtra-Upaskâra, Muktâvalî, Dinakarî, etc.

For a vigorous criticism of the same see Bâd. Sûtras with the Com. of S'aṁkara, Râmânuja, etc.

## Appendices.

### 1.

"इहेदमिति यतः कार्यकारणयोः स समवायः" Vais'. Sûtras VII–ii–26.

"कार्यकारणयोरित्युपलक्षणम् । अकार्यकारणयोरपि द्रष्टव्यम् । तदुक्तं पदार्थप्रदेशाख्ये प्रकरणे "अयुतसिद्धानामाधार्याधारभूतानां यः संबन्धः इहेतिप्रत्ययहेतुः स समवायः इति असंबद्धयोरविद्यमानत्वमयुतासिद्धिः । इह कुण्डे दधि इह कुण्डे वदराणीतिवत् इह तन्तुषु पटः इह वीरणेषु कटः इह द्रव्ये द्रव्यगुणकर्माणि इह गवि गोत्वम् इहात्मनि ज्ञानम् इहाकाशे शब्द इतीहबुद्धिरुत्पद्यमाना न विना संबन्धमुत्पत्तुमर्हति तेनानुमीयतेऽस्ति कश्चित् संबन्धः । न चासौ संयोग एव । अन्यतरकर्मादीनां तदुत्पादकानामभावात् विभागपर्यवसानाभावाच्च संबन्धिनामयुतसिद्धत्वाच्च नियताधिकरणतयैवोन्नेयत्वात् अप्रत्यक्षत्वात् एकत्वात् नित्यत्वाच्च ॥ नन्वेकश्चेत् समवायस्तदा द्रव्यत्वादीनां संकरप्रसङ्गः कर्मत्वादिसमवायस्य द्रव्ये संभवात् । मैवम् । आधाराधेयनियमादेवासंकरात् । यद्यपि य एव द्रव्यत्वसमवायः स एव गुणत्वकर्मत्वादीनामपि तथापि तेषां न द्रव्यमाधारः तत्र तेषामप्रतीतेः । द्रव्येष्वेव द्रव्यत्वं प्रतीयते गुणेष्वेव गुणत्वं कर्मस्वेव कर्मत्वं न त्वन्यत्रेत्यन्वयव्यतिरेकदर्शनादेव नियमः ।.........। स चायं नित्यः । अकारणकत्वात् । भावानां हि समवायिकारणादुत्पत्तिनियमः । .........। तन्तुषु पटसमवायः पटे रूपसमवायः इतिःप्रतीतिः कथमिति चेत् । स्वरूपसंबन्धेन। समवायान्तराङ्गीकारेऽनवस्थापातात् । तर्हीह पटे रूपमित्यपीहप्रत्ययः स्वरूपसंबन्धेनैव स्यात् किं समवायेनेति चेन्न । तत्रातिरिक्तसंबन्धे बाधकाभावात् ॥ ...... समवायो नानानित्यश्चेति प्राभाकराः । तच्चानुपपन्नम् । रूपं नष्टमिति प्रत्ययो न तु रूपसमवायो नष्ट इति कस्यापि प्रत्ययः । प्रत्यक्षः समवाय इति नैयायिकाः । तदप्यनुपपन्नम् । समवायोऽतीन्द्रियः आत्मान्यत्वे सत्यसमवेतभावत्वात् मनोवत् कालादिवद्वा"—Vaiś. Sûtras VII, ii, 26-27-28 Upaskâra.

## Stanza VIII.

The commentary on the last stanza was only a preliminary skirmish directed against one single tenet of the Vais'eṣika preparatory to the main offensive which is now going to be vigorously conducted against the whole of the Vais'eṣika philosophy, especially against its doctrine of सामान्य and its conception of the nature of आत्मन् and मोक्ष.

### I. Vais'eṣika Categories and their subdivisions.

**1.** The *Six Padârthas* or the highest Nameables: (1) द्रव्य, (2) गुण, (3) कर्म, (4) सामान्य, (5) विशेष, and (6) समवाय. Later Vaiśeṣikas add (7) अभाव.

The Vaiśeṣika Sûtra says: "धर्मविशेषप्रसूताद्द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्," on which the Pras'astapâda-Bhâṣya runs as follows:—"द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां साधर्म्यवैधर्म्यतत्त्वज्ञानं निःश्रेयसहेतुः," thus fixing the number of पदार्थs definitely at *six*. Its commentator—S'rîdhara, of the tenth century A. D.—would add 'अभाव' as the seventh to complete the list of the categories; for, अभाव is as real as the rest, and yet it is not mentioned by the Sûtrakâra or the Bhâṣyakâra, not because it is not a real category but because it is dependent upon भाव. The argument, or rather the excuse, for the omission would go too far and would apply to certain other categories such as गुण etc., which are dependent upon द्रव्य. The same weakness belongs to the following remark of Udayana and his commentator: "अभावस्तु स्वरूपवानपि पृथक् नोद्दिष्टः। प्रतियोगिनिरूपणाधीननिरूपणत्वात्। न तु तुच्छत्वात् [Thus the doctrine differs from that of the S'. Vedânta and Prabhâkara's school]"; "अभावो भाष्यकृता नोपवर्णितः तुच्छत्वादिति केचित्। तन्मतनिरासायाह। अभावस्त्विति। स्वरूपवान् प्रामाणिकः। पृथगद्रव्यादिवत्तत्त्वज्ञानविषयतया। न तु अत्र भाष्ये नोक्त एव। फलस्य निःश्रेयसस्याभावरूपत्वादित्याशयः। तथानभिधाने हेतुमाह। प्रतियोगीति। प्रतियोगिनिरूपणं शास्त्रान्तरं तच्च प्रकृते न्यायदर्शनम्" [This is a new and very curious explanation of 'प्रतियोगिन्' which could never have been meant by Udayana]। तदधीननिरूपणत्वादित्यर्थः। नन्वेतावताभ्युपगमसिद्धान्तसिद्धत्वमभावे उक्तं तच्च तदा स्याद्यदि स्वतन्त्रे [वैशेषिके] अभावोऽ-

धिकृतः स्यात्। इति स्वतन्त्रेऽधिकृतत्वमाह। उत्पत्तीति। प्रागभाववत एवोत्पत्तिरिति तच्चिन्तायां प्रागभावोऽधिकृतः। विनाशचिन्तायां तु ध्वंसः प्राधान्येनैवाधिकृतः। वैधर्म्यकथनेऽन्योन्याभावात्यन्ताभावावधिकृतौ। वैधर्म्यस्य व्यतिरेकहेतुतया तत्साध्यतयाऽन्योन्याभावस्य व्यतिरेकव्याप्तौ साध्यहेत्वोरत्यन्ताभावस्य स्वीकृतत्वादिति भावः। अभ्युपगमसिद्धान्तसिद्धस्य च प्राधान्येनानभिधानं न्यायदर्शने मनस इन्द्रियत्वस्य दृष्टमिति हृदयम् ॥"—Kiraṇâvalî-Bhâskara.

This is justifying the recognition of अभाव as a category on the authority of a sister school—the Nyâyadars'ana—and its implied acceptance by the Vaiś. Sûtrakâra himself in the Sûtras which refer to प्रागभाव and प्रध्वंसाभाव, and to अन्योन्याभाव and अत्यन्ताभाव, under the names वैधर्म्य and व्यतिरेक. Here is one example of the conservative liberalism of Indian writers. This explanation, however, does not cure the enumeration in the V.-Sûtra of the defect of being inexhaustive. It only justifies addition. Udayana is on much firmer ground when he says in the Lakṣaṇâvali:" अभिधेयः पदार्थः— । स द्विविधः। भावाभावभेदात्। तत्र नञर्थविषयत्वरहितप्रत्ययविषयो भावः। स च षोढा द्रव्यादिभेदेन" that is to say, that the Sûtrakâra had before his mind only the भावs when he penned this Sûtra.

2. The Nine *Dravyas*: (1) पृथ्वी, (2) अप्, (3) तेजः etc., "क्रियागुणवत् समवायिकारणम्" V.-Sûtra–तमः or अन्धकार which is regarded by Mîmâṁsakas and some others as a positive dravya is according to the Nyâya–Vaiś. nothing but तेजःसामान्याभाव.

3. The twenty-four Guṇas: 17–रूप etc., *plus* 7 द्रवत्व etc. The original Sûtra mentioned only *seventeen* to which Praśastapâda, added *seven*, वेग (Velocity ), भावना ( Impression—physical and mental ), and स्थितिस्थापक ( Elasticity )—are but different varieties of संस्कार and so are included in संस्कार by virtue of the jâti संस्कारत्व which belongs to them all. शौर्य, औदार्य etc.—come under the recognised heads of Guṇas. On the number of गुणs cf. "गुणाश्च रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाश्चेति कण्ठोक्ताः सप्तदश। च-शब्दसमुच्चिताश्च गुरुत्व-द्रवत्व-स्नेह-संस्कारा-दृष्ट-शब्दाः सप्तैवेत्येवं चतुर्विंशतिर्गुणाः॥"—P. Bhâṣya; and "ये तु शौर्यौदार्यकारुण्यदाक्षिण्यौद्धत्यादयः तेऽत्रैवान्तर्भवन्ति। शौर्यं बलवतोऽपि परस्य पराजयाय प्रत्युत्साहः स च प्रयत्नविशेष एव। सततं सन्मार्गवर्तिनी

बुद्धिरौदार्यम्। अपरदुःखप्रहाणेच्छा कारुण्यम्। तत्त्वाभिनिवेशिनी बुद्धिर्दाक्षिण्यम्। औद्यमात्मन्युत्कर्षप्रत्ययः। इत्येवमादिः। अदृष्टशब्देन धर्माधर्मयोरुपसंग्रहः। संस्कार इति च वेगस्य भावनायाः स्थितस्थापकस्य चाभिधानम्॥"—"नन्वेवं तर्ह्याधिक्यम्। न। संस्कारजात्यपेक्षया वेगभावनास्थितस्थापकानामेकत्वात्। एवं तर्हि न चतुर्विंशतित्वम्। अदृष्टत्वजात्यपेक्षया धर्माधर्मयोरेकत्वात्। न। अदृष्टत्वजात्यभावात्। निर्गुणेष्वपि गुणेष्वसाधारणधर्मयोगित्वेनोपचाराच्चतुर्विंशतिरिति व्यवहारः॥" N. Kandalî.

4. The five कर्मन्s : उत्क्षेपण, etc.—"गमनग्रहणात्" etc. a remark found in almost every book of the school. For स्यन्दन some read स्पन्दन (vide Pr. Bhâṣya and N. Kandalî). Upaskâra reads स्यन्दन, as in our printed text. कर्म is thus defined:—"एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम्."

5. सामान्य—Generality—the principle of the co-ordination of individuals in one group. The whole passage bearing on सामान्य and the next two categories—from here to the end of the first section इति षट् पदार्थाः—occurs also in the Laghu Vṛtti on the Ṣad. D-Sam: see pp. 61–62–63 तच्च द्विविधं etc. One would suppose that the highest point to which a generalization could be carried was पदार्थत्व embracing *all* the पदार्थs in one group. But this is not what the Vais'. thinks. Certain categories he sets aside as incapable of possessing सामान्य in the real sense of the term*—which, according to him, belongs to only three categories, viz., द्रव्य, गुण and कर्म. This highest सामान्य he calls सत्ता, also भाव ( cf. Vaiś. Sûtra I. ii. 4, भावोऽनुवृत्तेरेव हेतुत्वात् सामान्यमेव) which, be it noted, does not mean Existence simply, but *Existence carried to the highest possible point of generalization*, which stops at the collective group of द्रव्य, गुण and कर्म, and cannot go beyond it. This सत्ता is otherwise called 'महासामान्य,' because it is the highest सामान्य to which *real* generalization can be carried. द्रव्यत्व, गुणत्व etc., are lower than this, but are higher than पृथ्वीत्व, रूपत्व etc., and are called अपरसामान्यs. An अपरसामान्य is not only a सामान्य, but also a विशेष—inas-

* The Vaiś.-Naiyâyikas, therefore, distinguish जाति from उपाधि. For this and सखण्ड and अखण्ड उपाधिs see Muktâvalî and Nîlakaṇṭhî.

much as it co-ordinates its individuals in a group and differentiates them from those of other groups, and is, therefore called, सामान्यविशेष. This fluid conception of सामान्य-विशेष which was held by the old Vaiśeṣikas is endorsed among later writers by Keśavamiśra in his Tarkabhâṣâ.

cf. "सामान्यं विशेष इति बुद्ध्यपेक्षम्"—Vaiś. Sûtra I. ii. 3. "सामान्यं द्विविधं परमपरं च। तत्र परं सत्ता। अपरं सत्ताव्याप्यं द्रव्यत्वादि। तत्र सामान्यस्य तद्विशेषस्य च लक्षणं बुद्धिरेव। अनुवृत्तबुद्धिः सामान्यस्य व्यावृत्तबुद्धिर्विशेषस्य...परमपि सामान्यमपरमपि तथा। परं तु सामान्यं विशेषसंज्ञामपि लभते यथा द्रव्यमिदं द्रव्यमिदमित्यनुवृत्तप्रत्यये सत्येव नायं गुणो नेदं कर्मेति विशेषप्रत्ययः। तथा च द्रव्यत्वादीनां सामान्यानामेव विशेषत्वम्।"—Upaskâra on V. S. I.ii. 3. "भावानुवृत्तेरेव हेतुत्वात् सामान्यमेव।" V.S. I.ii.4. "द्रव्यत्वं गुणत्वं कर्मत्वं च सामान्यानि विशेषाश्च"—V.S.I. ii. 5. "अन्यत्रान्त्येभ्यो विशेषेभ्यः" V. S. I. ii. 6. "अन्त्या विशेषा नित्यद्रव्यवृत्तयोऽभिहितास्तान् वर्जयित्वा सामान्यविशेषाभिधानमित्यर्थः।" Upaskâra, ibid. "सदिति यतो द्रव्यगुणकर्मसु सा सत्ता।" V.S.I. ii. 7. "द्रव्यगुणकर्मभ्योऽर्थान्तरं सत्ता" V. S. I. ii. 8. "न तु द्रव्यगुणकर्मभ्यः पृथग्भावेन सत्ता नानुभूयतेऽतो द्रव्याद्यन्यतममेव सत्ता। यतो हि यद्भिन्नं भवति तत्ततो भेदेनानुभूयते यथा घटः पटात्। न च सत्ता तेभ्यो भेदेनानुभूयते इति तदात्मिकैवेत्यत आह द्रव्येति। द्रव्यादयोऽननुगताः। सत्ता चानुगता। तथा च अनुगतत्वाननुगतत्वलक्षणविरुद्धधर्माध्यासेन तेभ्यो भेदस्य सिद्धत्वात्। यत्तु तेभ्योऽन्यत्र नोपलभ्यते तदयुतसिद्धबलात्। घटपटयोस्तु युतसिद्धिः। न च व्यक्तिस्वरूपमेव सत्ता। व्यक्तीनामननुगमात्। स्वरूपत्वं यद्यनुगतं तदा सैव सत्ता। अननुगतैरपि स्वरूपैरनुगतव्यवहारश्चेत्तदा गोत्वादिभिरपि गतम्॥" Upaskâra, ibid. "गुणकर्मसु च भावान्न कर्म न गुणः" V.S.I.ii.9. "न हि कर्म कर्मसु वर्तते न वा गुणो गुणेषु न वा द्रव्यं गुणे कर्मणि वा। सत्ता तु गुणे कर्मणि च वर्तते तेन द्रव्यगुणकर्मवैधर्म्यात्तेभ्यो भिन्नैव सत्ता॥" Upaskâra, ibid. "सामान्यविशेषाभावेन च॥" V. S. I. ii. 10. "यदि सत्ता द्रव्यं गुणः कर्म वा स्यात् तदा सामान्यविशेषवती स्यात्। न च सत्तायां सामान्यविशेषा द्रव्यत्वादय उपलभ्यन्ते। न हि भवति सत्ता द्रव्यं गुणः कर्म वेति केषांचिदनुभवः।" Upaskâra, ibid.

"सामान्यं द्विविधं परमपरं च अनुवृत्तिप्रत्ययकारणम्। तत्र परं सत्ता महाविषयत्वात्। सा चानुवृत्तेरेव हेतुत्वात् सामान्यमेव। द्रव्यत्वाद्यपरमल्पविषयत्वात् तच्च व्यावृत्तेरपि हेतुत्वात् सामान्यं सद् विशेषाख्यामपि लभते।" P.Bhâṣya.

"सामान्यं द्विविधं परमपरं च। स्वविषयसर्वगतमभिन्नात्मकमनेकवृत्ति एकद्विबहुष्वात्मस्वरूपानुगमप्रत्ययकारि स्वरूपाभेदेनाधारेषु प्रबन्धेन वर्तमान-

भनुवृत्तिप्रत्ययकारणम् ।......। तत्र सत्तासामान्यं परमनुवृत्तिप्रत्ययकारणमेव। यथा परस्परविशिष्टेषु चर्मवस्त्रकम्बलादिष्वेकस्मान्नीलद्रव्याभिसंबन्धात् नीलं नीलमिति प्रत्ययानुवृत्तिः तथा परस्परविशिष्टेषु द्रव्यगुणकर्मस्वविशिष्टा सत् सदिति प्रत्ययानुवृत्तिः सा चार्थान्तराद्भवितुमर्हतीति यत्तदर्थान्तरं सा सत्तेति सिद्धा। सत्तानुसंबन्धात् सत्सदिति प्रत्ययानुवृत्तिः। तस्मात् सा सामान्यमेव। अपरं द्रव्यत्वगुणत्वकर्मत्वादि अनुवृत्तिव्यावृत्तिहेतुत्वात् सामान्यं विशेषश्च भवति ।......। एतानि तु द्रव्यत्वादीनि प्रभूतविषयत्वात् प्राधान्येन सामान्यानि स्वाश्रयविशेषकत्वाद्भक्त्या विशेषाख्यानीति ॥" P. Bhâṣya.

"तत्र तयोर्मध्ये परं सत्ता भावो महासामान्यमिति चोच्यते। द्रव्यत्वाद्यवान्तरसामान्यापेक्षया महाविषयत्वात्। अपरसामान्यं द्रव्यत्वादि एतच्च सामान्यविशेष इत्यपि व्यपदिश्यते। तथाहि । द्रव्यत्वं नवसु द्रव्येषु वर्तमानत्वात् सामान्यम् गुणकर्मव्यावृत्तत्वाद्विशेषः ततः कर्मधारये सामान्यविशेष इति। एवं द्रव्यत्वाद्यपेक्षया पृथिवीत्वादिकमपरं तदपेक्षया घटत्वादिकम्। एवं चतुर्विंशतौ गुणेषु वृत्तेर्गुणत्वं सामान्यं द्रव्यकर्मभ्यो व्यावृत्तेश्च विशेषः। एवं गुणत्वापेक्षया रूपत्वादिकं तदपेक्षया नीलत्वादिकम्। एवं पञ्चसु कर्मसु वर्तमानत्वात्कर्मत्वं सामान्यं द्रव्यगुणेभ्यो व्यावृत्तत्वाद्विशेषः। एवं कर्मत्वापेक्षयोत्क्षेपणत्वादिकं ज्ञेयम्॥ तत्र सत्ता द्रव्यगुणकर्मभ्योऽर्थान्तरं कया युक्त्येति चेत् उच्यते। न द्रव्यं सत्ता द्रव्यादन्येत्यर्थः एकद्रव्यत्वात् एकैकस्मिन् द्रव्ये वर्तमानत्वादित्यर्थः द्रव्यत्ववत्। यथा द्रव्यत्वं नवसु द्रव्येषु प्रत्येकं वर्तमानं द्रव्यं न भवति किंतु सामान्यं विशेषलक्षणं द्रव्यत्वमेव एवं सत्तापि। वैशेषिकाणां हि अद्रव्यं वा द्रव्यं अनेकद्रव्यं वा द्रव्यम्। तत्राद्रव्यं द्रव्यमाकाशं कालो दिग् आत्मानः परमाणवः। अनेकद्रव्यं तु द्व्यणुकादिस्कन्धाः। एकद्रव्यं तु द्रव्यमेव न भवति। एकद्रव्यवती सत्तेति द्रव्यलक्षणविलक्षणत्वान्न द्रव्यम्। एवं न गुणः सत्ता गुणेष्वभावात् गुणत्ववत्। यदि हि सत्ता गुणः स्यात् न तर्हि गुणेषु वर्तेत। निर्गुणत्वाद्गुणानाम्। वर्तते च गुणेषु सत्ता। सन् गुण इति प्रतीतेः। तथा न सत्ता कर्म कर्मसु भावात् कर्मत्ववत्। यदि च सत्ता कर्म स्यात् न तर्हि कर्मसु वर्तेत। निष्कर्मत्वात् कर्मणाम्। वर्तते च कर्मसु भावः। सत्कर्मेति प्रतीतेः। तस्मात् पदार्थान्तरं सत्ता॥" Maṇibhadra's Com. on Ṣad. Dars'. Sam. pp. 61–62.

"तच्च द्रव्यत्वादिकं स्वाश्रयेषु द्रव्यादिष्वनुवृत्तिप्रत्ययहेतुत्वात् सामान्यमप्युच्यते। स्वाश्रयस्य च विजातीयेभ्यो गुणादिभ्यो व्यावृत्तिप्रत्ययहेतुतया विशेषोऽप्युच्यते। ततोऽपरं सामान्यमुभयरूपत्वात् सामान्यविशेषसंज्ञां लभते। अपेक्षाभेदादेकस्यापि सामान्यविशेषभावो न विरुध्यते॥"—Guṇaratna's Com. on Ṣad-Dars'. Sam. p. 276.

"परे पुनः प्राहुः। सामान्यं त्रिविधं महासामान्यं सत्तासामान्यं सामान्यविशेषसामान्यं च। तत्र महासामान्यं षट्स्वपि पदार्थेषु पदार्थत्वबुद्धिकारि। सत्ता॰

सामान्यं त्रिपदार्थसिद्धबुद्धिविधायि । सामान्यविशेषसामान्यं तु द्रव्यत्वादि ॥ अन्ये त्वाचक्षते । त्रिपदार्थसत्कारि सत्ता । सामान्यं द्रव्यत्वादि । सामान्यविशेषः पृथिवीत्वादिति । लक्षणभेदादेतेषां सत्तादीनां द्रव्यगुणकर्मभ्यः पदार्थान्तरत्वं सिद्धम् ।" ibid. p. 277.

तत्र सत्ता द्रव्यगुणकर्मभ्यो etc.—Next it is shown how सत्ता ( the महासामान्य ) is a पदार्थ outside the groups of द्रव्य, गुण and कर्म. cf. "द्रव्यगुणकर्मभ्योऽर्थान्तरं सत्ता" Vais'. Sûtra. I. ii. 8.

(1) "न द्रव्यं सत्ता ।": सत्ता is not a द्रव्य, because it is lacking the characteristic mark of a द्रव्य which is that it should be made of many constituent द्रव्यs (अनेकद्रव्यत्व), or of no द्रव्य (अद्रव्यत्व), but never of a single constituent द्रव्य (एकद्रव्य). Like द्रव्यत्व, सत्ता resides in each द्रव्य. And nothing which resides in a single द्रव्य can be a द्रव्य itself. But सत्ता does reside in each single द्रव्य (एकैकस्मिन् द्रव्ये वर्तमानत्वात् ... एकद्रव्यवती च सत्ता इति द्रव्यलक्षणविलक्षणत्वान्न द्रव्यम्). According to the Vaiśeṣika अद्रव्यं वा etc.—"a द्रव्य is without a constituent द्रव्य, or has many constituent द्रव्यs, but never a single ( unitary ) constituent द्रव्य; for example, आकाश, काल, दिश्, आत्मन् and परमाणुs are द्रव्यs devoid of constituent द्रव्यs, while bodies such as द्व्यणुक (duads), त्र्यणुक (triads), etc., are possessed of *many* constituent द्रव्यs—viz. the parts of which they are composed ( See Muktâ-Dinakarî ). But the सत्ता fulfils neither of the two conditions: it is एकद्रव्यवती, that is, it exists in a single द्रव्य—*e. g.* गोत्व in a single cow—no less than in many cows; and it is, therefore, not a द्रव्य.

(2) "एवं न गुणः सत्ता ।": सत्ता is not a गुण. For, it resides in a गुण. And a गुण can never reside in a गुण, गुणs being themselves निर्गुण.

(3) "तथा न सत्ता कर्म ।": सत्ता is not a कर्म. For, it resides in a कर्म. And a कर्म cannot reside in a कर्म, कर्मन्s being themselves निष्कर्म.

6. विशेष :—cf. Praśastapâda Bh. and Nyâyakandalî: pp.321-22. विशेषs—rather a certain class of विशेषs, according to the original notion of विशेष which was more comprehensive than the later, are resident in नित्यद्रव्यs and are ultimate, they are absolutely exclusive and thus they serve to distinguish the dravyas

to which they belong from other dravyas (स्वाश्रयविशेषकत्वात्). They reside in each of the नित्यद्रव्यs—one in each individual unit—viz., अणुs, आकाश, काल, दिश्, आत्मन् and मनः. Just as we distinguish cows from horses owing to certain physical features, so do yogins perceive the distinction of atom A from atom B both of which belong to the substance of the same genus, despite all their homogeneity in point of shape, quality, etc. This must be in virtue of something in A which is not in B—and that something is called विशेष. There is one विशेष for each नित्यद्रव्य, and no विशेष belongs to more than one द्रव्य; therefore, it does not serve as a basis of co-ordination, and so, unlike अपरसामान्यs such as द्रव्यत्व etc which are 'सामान्यविशेष,' these are pure विशेषs.

According to the older conception of विशेष, विशेषs are of two kinds: first, those that are *relative* and consequently not incompatible with सामान्य: these are सामान्यविशेषs (see supra); secondly, those that are *ultimate* and *absolute*. The latter are 'अन्त्य' and 'नित्यद्रव्यवृत्ति' Later Nyâya takes note of the latter only, and in it, it is not अन्त्यविशेष (as distinguished from सामान्यविशेष) which is described as नित्यद्रव्यवृत्ति, but अन्त्य and नित्यद्रव्यवृत्ति are both predicates of the subject विशेष; cf. "अन्त्यो नित्यद्रव्यवृत्तिविशेषः परिकीर्तितः—" Bh. Pariccheda and "अन्तेऽवसाने वर्तते इति अन्त्यः यदपेक्षया विशेषो नास्तीत्यर्थः। घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदात् परस्परं भेदः। परमाणूनां परस्परं भेदको विशेष एव। स तु स्वत एव व्यावृत्तस्तेन विशेषान्तरापेक्षा नास्तीत्यर्थः॥"—Muktâvalî on the same. "नन्वेतत्परमाणुत्वादयो व्यावर्तका भविष्यन्ति, किं विशेषेणेति चेन्न। अव्यावृत्तधर्मस्य व्यावर्तकत्वासंभवात्। तत्र व्यावर्तकान्तरापेक्षायामनवस्थानात्। ननु विशेषेष्वेव प्रसङ्ग इति चेन्न। तस्य धर्मिग्राहकमानेन स्वतोव्यावृत्ततयैव सिद्धेः। एवं च नित्यद्रव्येषु विशेषाः सिद्धाः। तद्गुणास्तु न विशेषवन्तः आश्रयरूपेण विशेषेणैव तेषां व्यावृत्तत्वात् आश्रयस्य च विशेषवत्तया व्यावृत्तत्वेन विशेषत्वासंभवात् इति भावः। ईश्वराकाशयोर्नित्यज्ञानशब्दाभ्यां व्यावृत्तेः संभवान्न तत्र विशेष इत्यप्याहुः। नवीनास्तु विशेषेऽतिरिक्ते मानाभावः॥"

Cf. "अन्यत्रान्त्येभ्यो विशेषेभ्यः" V. Sûtra I. ii. 6.

"ननु य एव विशेषपदार्थ उद्दिष्टः स एव किं सामान्यविशेषत्वेनाभिधीयते इति शिष्याकाङ्क्षामपनयन्नाह। अन्यत्रेति। अन्त्या विशेषा नित्यद्रव्यवृत्तयो येऽभि-

हितास्तान् वर्जयित्वा सामान्यविशेषाभिधानमित्यर्थः। अन्तेऽवसाने भवन्तीत्यन्त्याः। यतो न व्यावर्तकान्तरमस्तीत्याचार्याः। उत्पादविनाशयोरन्तेऽवसाने भवन्तीत्यन्त्या नित्यद्रव्याणि तेषु भवन्तीत्यन्त्या विशेषा इति वृत्तिकृतः। ते हि विशेषा एव व्यावृत्तिबुद्धिहेतवो न तु सामान्यरूपा अपीति ॥"—Upaskâra on the same.

तथा च प्रशस्तकरः—तेऽन्त्या विशेषा इति—The passage thus quoted from P. Bhâṣya is found verbatim in the printed editions, with just one slight variation—विप्रकर्षे for विप्रकृष्टे—which too is a reading of one of the MSS. The original passage, which is longer, concludes as follows: "अथान्त्यविशेषेष्विव परमाणुषु कस्मान्न स्वतः प्रत्ययव्यावृत्तिः कल्प्यते इति चेन्न। तादात्म्यात्। इहातदात्मकेष्वन्यनिमित्तः प्रत्ययो भवति। यथा घटादिषु प्रदीपात् न तु प्रदीपे प्रदीपान्तरात्। यथा गवाश्वमांसादीनां स्वत एवाशुचित्वं तद्योगादन्येषां तथेहापि। तादात्म्यादन्त्यविशेषेषु स्वत एव प्रत्ययव्यावृत्तिः तद्योगात् परमाण्वादिष्विति ॥ P. Bh. on विशेष.

7. तथा अयुतसिद्धानां etc.—

अयुतसिद्धयोः—The term is explained as परस्परपरिहारेण पृथगाश्रयानाश्रितयोः *i. e.* which do not reside in separate आश्रयs to the exclusion of each other, *e. g.* तन्तुs and पट which do not reside in separate आश्रयs to the exclusion of each other. For the literal meaning of the word अयुतसिद्ध see Ṣaḍ–Darśana–Sam., Guṇaratna's Com.p. 278. "य इहायुतसिद्धानामाधाराधेयभूतभावानां संबन्ध इह प्रत्ययहेतुः स हि भवति समवायः॥ केचिद्धातुपारायणकृतो यु अमिश्रणे इति पठन्ति। तत एवायुतसिद्धानामिति वैशेषिकीये सूत्रे। अयुतसिद्धानामपृथक्सिद्धानामिति व्याख्यातम्।" For the oft-quoted definition see Tarka–Bhâṣâ: "ययोर्द्वयोर्मध्य एकमविनश्यदपराश्रितमेवावतिष्ठते तावेवायुतसिद्धौ। तदुक्तम् तावेवायुतसिद्धौ द्वौ विज्ञातव्यौ ययोर्द्वयोः। अनश्यदेकमपराश्रितमेवावतिष्ठते ॥" See Pras'asta Bhâṣya and Nyâyakandalî.

इह तन्तुषु etc.—समवाय defined as the असाधारणकारण–the special cause–which accounts for such judgments as 'इह तन्तुषु पटः', a judgment of distinction between तन्तुs and पट, and yet of their indissoluble union.

## II. Explanation of the text of the Stanza.

1. According to the Vaiśeṣika, of the things existent, viz., the six padârthas, only some possess सत्ता.

अस्तित्व—the very स्वरूप of a thing belongs to सामान्य etc., but it does not form the basis of any अनुवृत्ति or co-ordination in their case, and is, therefore, distinguished from that fuller and more real अस्तित्व which belongs to द्रव्य, गुण and कर्म. The latter is technically known as 'सत्ता', and is the basis of 'सत्प्रत्यय' and 'अनुवृत्तिप्रत्यय' *i. e.* judgments of existence and co-ordination. The reason why no judgment of co-ordination and therefore सामान्य is possible in the case of सामान्य, विशेष and समवाय is that in the case of सामान्य it would lead to 'अनवस्था' ( a सामान्य in a सामान्य and so on *ad infinitum* ); in the case of विशेष it would contradict its very nature ( 'रूपहानि' ) to possess सामान्य ; and in the case of समवाय, there will be the lack of that very संबन्ध viz. समवाय, which is required for holding the सामान्य; for, समवाय cannot exist in a समवाय ( 'असंबन्धात्' ). This famous Kârikâ of Udayanâcârya –"व्यक्तेरभेद: etc."—is found in his Kiraṇâvalî, a commentary on P. Bhâṣya.

This stanza of Udayanâcârya has been explained in numerous books on Nyâya. Let us quote two explanations, one given briefly by Guṇaratna in S. D. S. Com.: "अस्य व्याख्या । व्यक्तेरभेद एकमनेकवर्ति सामान्यम् । आकाशे व्यक्तेरभेदान्न जातित्वम् १ । पृथिवीत्वे जातौ यदि भूमित्वमुच्यते तदा तुल्यत्वम् २ । परमाणुषु जातित्वेऽङ्गीकृते पार्थिवाप्यतैजसवायवीयत्वयोगात् संकरः ३ । सामान्ये यदि सामान्यमङ्गीक्रियते तदा मूलक्षतिकारिणी अनवस्थितिः ४ । विशेषेषु यदि सामान्यं स्वीक्रियते तदा विशेषस्य रूपहानिः ५ । यदि समवाये जातित्वमङ्गीक्रियते तदा संबन्धाभावः ६ । केन हि संबन्धेन तत्र सत्ता संबध्यते । समवायान्तराभावात् ।" p. 276; the other in Jayanârâyaṇa's Vivṛti of Upaskâra: "तत्रैकव्यक्तिकत्वादाकाशं न जातिः । अन्यूनानतिरिक्तव्यक्तिकत्वाद्घटत्वं कलशत्वं च न जातिद्वयम् । परस्पराऽत्यन्ताभावसमानाधिकरणयोरेकव्यक्तिसमावेशेन संकरेण भूतत्वं मूर्त्तत्वं च न जातिः । अनवस्थाभयात् सामान्यत्वं न जातिः । विशेषस्य व्यावृत्तस्वभावस्य रूपहानिर्विशेषत्वजातिबाधिका । यदि विशेषत्वं जातिः स्यात् तदा जातिमतः स्वतोऽव्यावृत्तत्वासंभवेन स्वतोव्यावृत्तत्वरूपस्य असाधारणधर्मस्य व्याघातः स्यादतो विशेषत्वं न जातिः । अथवा रूपहानिः स्वरूपहानिः । तथा च विशेषा यदि मूर्तवृत्तित्वे सति जातिमन्तः स्युस्तदा गुणाः कर्माणि वा स्युः विभुवृत्तित्वे सति जातिमन्तः स्युस्तदा गुणाः स्युरिति विशेषस्य स्वरूपहानिर्विशेषत्वजातिबाधिका । समवायसंबन्धाभावात् समवायत्वं न जातिः । समवाये समवायान्तरस्वीकारेऽनवस्थाप्रसङ्गात् । उत्पादविनाशशालिनो बहवः समवाया इति मते नैतत् ।

अन्यथैकव्यक्तिकत्वादपि समवायत्वं न जातिः स्यात् । एवमभावत्वस्य जातित्वे समवायसंबन्धाभाव एव बाधकः इत्यादिकमूहनीयम् ॥ प्राभाकरास्तु संस्थानव्यङ्ग्यैव जातिः सा च गुणकर्मणो नास्तीत्याहुः ।"

2. तथा चैतन्यं etc.—Second line of the Stanza. Another curious doctrine of the Vaiś. is that ज्ञान is *absolutely* distinct from आत्मन् ( a particular variety of the general relation of धर्म and धर्मिन् discussed in the last stanza.)

अन्यत्—absolutely distinct; the word is not subordinated to any compound, and it thus yields the idea of *absolute* distinction, not some distinction. The latter the Jaina too is prepared to hold.

अत्यन्तभेदे etc.—Absurd as the doctrine is, it requires to be given some appearance of reasonableness. Hence, औपाधिक in the stanza, which means 'arising from an उपाधि' *i. e.* conditioning circumstance, which in the present case is समवाय. Thus, the line means : चैतन्य or ज्ञान is absolutely distinct from आत्मन् but is connected with आत्मन् by समवायसंबन्ध; in other words, ज्ञान is an adventitious, not an essential, attribute of आत्मन्.

यद्यात्मनो etc.—If आत्मन् were not distinct from ज्ञान, the cessation of ज्ञान which must take place in the state of मोक्ष would mean the cessation—the death—of आत्मन्. Hence, the Vaiś. doctrine of आत्मन् as separate from ज्ञान. "दुःख–जन्म–प्रवृत्ति etc.'—is Nyâyasûtra I. i. 9. It means : Pain, Birth, Activity, Passion, Error—of these every preceding one being destroyed, every succeeding one is destroyed also; thus, in the state of मोक्ष, all the special गुणs of आत्मन्, viz. बुद्धि etc., cease to exist.

3. तथा न संविद्—A third curious doctrine of the Vaiś. is that in the state of मोक्ष, there is no संविद् (ज्ञान) or आनन्दः, बुद्धि, सुख etc. are all extirpated from आत्मन् in that state.

प्रयोगश्चात्र etc.—Syllogism to prove that the nine विशेषगुणs of आत्मन्, viz. बुद्धि etc., must cease to exist in the state of मोक्ष. It is based upon the hetu 'संतानत्वात्', *i. e.* because they are 'streams', i. e. none of them is a permanent nature of आत्मन्, but a stream of qualities continuously flowing on the ground of आत्मन्.

न हि वै सशरीरस्य etc.—This is a text of the Châandogya Upaniṣad, declaring that when आत्मन् is rid of the body–as he must be in the state of मोक्ष—सुख and दुःख touch him no more.

अपि च etc.—The verses quoted here, with the exception of couplet No. 5, occur in न्या. मञ्जरी p. 508. The latter has one more couplet which gives the list of the six ऊर्मिs : "प्राणस्य क्षुत्पिपासे द्वे लोभमोहौ च चेतसः। शीतातपौ शरीरस्य षडूर्मिरहितः शिवः।" A recent edition of the स्याद्वादमञ्जरी quotes in the footnote a somewhat different list: "प्राणस्य क्षुत्पिपासे द्वे मनसः शोकमूढते। जरामृत्यू शरीरस्य षडूर्मिरहितः शिवः।—इति पुराणे." The list of the text differs from both ( Text p. 39 l. 118).

सुसूत्रं etc.—सुसूत्रम् (noun)=A good (ironical, and therefore= bad ) doctrine, indeed, has been formulated by them ! सुसूत्रम् (adverb ) = with excellent ( ironical ) reason. For the irony contained in the word, the commentator compares उपकृतं etc.— which is quoted in the Kâvyaprakâs'a.

### III. Criticism of the Vais'eṣika doctrines detailed above :—

1. अविशेषेण etc.—It is a piece of great audacity to restrict सत्ता to the three padârthas द्रव्य, गुण and कर्म, when the idea of existence is undeniably predicable of all the padârthas.

यतः परिभाव्यताम् etc.—Just see how the word सत्ता is formed : it is an abstract noun from सत्–existing, pres. part. of अस् to exist. It is, therefore, wholly equivalent to अस्तित्व—and since अस्तित्व is the very स्वरूप of things, which you are prepared to predicate of all the पदार्थs (see supra )–the plea that अनुवृत्तिप्रत्यय or co-ordination is possible in the case of the first three and is absent from the rest is baseless. For, अनुवृत्तिप्रत्यय is possible in the case of all the categories. For, just as we say पृथ्वीत्व is a सामान्य, गोत्व is a सामान्य, घटत्व is a सामान्य and so on, thus referring to a common idea ( अनुवृत्तिप्रत्यय ) of सामान्य running through all its specimens, in the same way, we have this विशेष, that विशेष, a third विशेष and so on, which shows that we have a general idea of विशेष which we recognize in all the विशेषs. Similarly in the

case of समवाय, there are several समवायs taken with their several अवच्छेदकs —which reveal one general idea of समवाय.

स्वरूपत्वसाधर्म्येण—It may be contended that in consequence of all the categories having a certain स्वरूप of their own, and therefore likeness in this particular, सत्ता which really belongs to the first three is erroneously extended to the rest. Thus, in consequence of false ascription ( अध्यारोप ) of सत्ता to सामान्य etc., we imagine that the सत्प्रत्यय runs through them also, whereas, as a matter of fact, what belongs to them is mere अस्तित्व ( not an अनुवृत्तसत्प्रत्यय ) as their वस्तुस्वरूप *i. e.* as the very being of those categories. The Jaina's answer to this argument is that if the ascription of सत्ता to सामान्य etc. be false for the reason that we are thereby ascribing a common nature to things that are really diverse, the same thing could be said about सत्ता as applied to द्रव्य, गुण, and कर्म, and one would be as much an 'अध्यारोप' ( false ascription ) as the other. The Vais'eṣika might reply that सत्ता as traced in द्रव्य, गुण and कर्म is *real*, while in the rest it is unreal, for there cannot be a false ascription unless there is reality somewhere, and that is in सत्ता as perceived in द्रव्य, गुण and कर्म. But this division of सत्ता into मुख्य and गौण,—मुख्य in the first three cases and गौण in the last three—could be reversed with equal justice, if only the distinction between real and unreal is to be secured somehow.

सामान्यादिषु बाधकसंभवात् etc. But it may be urged that the सत्प्रत्यय in the case of the सामान्य etc. is गौण owing to the difficulties mentioned above (see above). But, in truth, the difficulties are quite imaginary. If the admission of सत्ता in सामान्य leads to अनवस्था, why not in द्रव्यs? In द्रव्यs there is the स्वरूपसत्ता (their very being) already, and admission of another सत्ता ( सामान्य ) would lead to similar अनवस्था. Then, as to विशेषs, there should be no harm in ascribing to them सत्ता, for that will not interfere with their nature, as is supposed, but will on the contrary, confirm it. Besides, a विशेष which is totally devoid of सामान्य is found nowhere. Lastly, the समवाय would lose its very being, unless it

possessed a स्वरूपसत्ता *i. e.* existence of something that makes it what it is viz., समवायत्व which gives it its peculiar character of 'अविष्वग्भावात्मकसंबन्ध' ( indissoluble relation ).

किं च तैर्वादिभिः—Moreover, the सत्ता cannot be a distinct reality added unto the द्रव्य etc. from without. If सत्ता be *absolutely* distinct from द्रव्य etc. the latter would be असत्. It may be urged that they acquire सत्त्व in consequence of their possessing सत्ता. But the answer to it is—If they are असत् in themselves, सत्ता cannot make them सत्; if they are सत् in themselves, सत्ता can add nothing and is therefore superfluous. If all the भावs have got their स्वरूपसत्त्व–their own individual being–what can सत्ता add to them or it ? If it be urged that a भाव is neither सत् nor असत् before it becomes invested with सत्ता and that it becomes सत् after it is so invested, all we need say is that it is useless hair-splitting, for nothing can be neither सत nor असत्, it must be one or the other or, as we Jainas prefer to maintain, both.

cf. "अथ सामान्यम्। तद्द्विधा–परमपरं च। तत्र परं महासत्ताख्यं द्रव्यादिपदार्थव्यापि। तथा चोक्तम्—"सदिति यतो द्रव्यगुणकर्मसु सा सत्ता"। अपरं च द्रव्यगुणत्वं गुणत्वकर्मत्वात्मकम्। तत्र न तावन्महासत्तायाः पृथक्पदार्थता युज्यते। यतस्तस्यां यः सदिति प्रत्ययः स किमपरसत्तानिबन्धन उत स्वत एव? । तत् यद्यपरसत्तानिबन्धनस्तत्राप्ययमेव विकल्पोऽतोऽनवस्था। अथ स्वत एव ततस्तद्वद् द्रव्यादिष्वपि स्वत एव सत्प्रत्ययो भविष्यतीति किमपरसत्तायाऽजागलस्तनकल्पया विकल्पितया? । किं च—द्रव्यादीनां किं सतां सत्तया सत्प्रत्यय उतासताम्? । तत् यदि सतां स्वत एव सत्प्रत्ययो भविष्यति। किं तया? । असत्पक्षे तु शशविषाणादिष्वपि सत्तायोगात् सत्प्रत्ययः स्यादिति। तथा चोक्तम्—"स्वतोऽर्थाः सन्तु सत्तावत् सत्तया किं सदात्मनाम्? । असदात्मसु नैषा स्यात् सर्वथातिप्रसङ्गतः॥" इत्यादि। एतदेव दूषणमपरसामान्येऽप्यायोज्यम्। तुल्ययोगक्षेमत्वात्। किं च—अस्माभिरपि सामान्यविशेषरूपत्वाद्वस्तुनः कथंचित्तदिष्यत एवेति। तस्य च कथंचित्तद्व्यतिरेकाद् द्रव्यग्रहणेनैव ग्रहणमिति॥ अथ विशेषाः ते चात्यन्तव्यावृत्तिबुद्धिहेतुत्वेन परैराश्रीयन्ते। तत्रेदं चिन्त्यते—या तेषु विशेषबुद्धिः सा नापरविशेषहेतुकाऽऽश्रयितव्या। अनवस्थाभयात्। स्वतः समाश्रयणे च तद्वद् द्रव्यादिष्वपि विशेषबुद्धिः स्यात् किं द्रव्यादिव्यतिरिक्तैर्विशेषैरिति। द्रव्यादिव्यतिरिक्तास्तु विशेषा अस्माभिरप्याश्रीयन्ते सर्वस्य सामान्यविशेषात्मकत्वादिति। एतत्तु प्रक्रियामात्रम्।

mentioned by other writers being subsidiary varieties of these: "परस्परविविक्तसामान्यविशेषविषयत्वात् द्रव्यार्थिकपर्यायार्थिकावेव नयौ, न च तृतीयं प्रकारान्तरमस्ति यद्विषयोऽन्यस्ताभ्यां व्यतिरिक्तो नयः स्यात्। तृतीयविषयस्य चासंभवो भेदाभेदविनिर्मुक्तस्य भावस्वभावस्यापरस्यानुपपत्तेः। ताभ्यामन्य एकस्तद्वानर्थोऽस्तीति चेत्, न; स्वभावान्तराभावात् प्रकृतविकल्पानतिवृत्तेः तत्स्वभावातिक्रमे वा खपुष्पसदृशत्वप्रसक्तेः॥" *i. e.* the principle of the main division is one of dichotomy and therefore no other variety is possible alongside of it, all the other varieties which are mentioned in other books falling under one or the other of these two: (दवट्ठिओ य पज्जवणओ य सेसा वियप्पा सिं द्रव्यास्तिकश्च पर्यायनयश्च शेषा विकल्पास्तयोः—Sammati. "शेषास्तु नैगमादयो विकल्पा भेदाः अनयोर्द्रव्यार्थिकपर्यायार्थिकयोः"—Com.)

The द्रव्यास्तिकनय is next divided into 'शुद्ध' or simple and 'अशुद्ध' or complex, represented respectively by the unitarian Vedântin and the trinitarian Sâmkhya. Both these schools of द्रव्यास्तिक, while they criticise their opponents from their own standpoints, are themselves criticised by the पर्यायास्तिकनय. Before proceeding to subdivide the latter, it may be mentioned as noteworthy that the author of the Sammati does not mention नैगमनय. But the commentator notes it and gives a derivation which is more probable than that given by देवसूरि, the author of the P. N. Tattvâlokâlamkâra ("नैकगमो नैगमः") and others. Thus, he says: "येषां तु मतेन नैगमनयस्य सद्भावस्तैस्तस्य स्वरूपमेवं वर्णितम्—राश्यन्तरोपलब्धं नित्यत्वमनित्यत्वं च नयतीति निगमव्यवस्थाभ्युपगमपरो च नैगमनयः। निगमो हि नित्यानित्य-सदसत्-कृतकाकृतकस्वरूपेषु भावेष्वपास्तसांकर्यस्वभावः सर्वथैव धर्मधर्मिभेदेन संपद्यत इति। स पुनर्नैगमोऽनेकधा व्यवस्थितः प्रतिपत्त्रभिप्रायवशान्नयव्यवस्थानात्। प्रतिपत्तारश्च नानाभिप्रायाः।—" *i. e.* नैगमनय is the method of arriving at absolute conclusion regarding the nature of things, *e. g.* something is नित्य, and something else is अनित्य. 'निगमन' a technical term of Indian Logic, which means deduction or arriving at a conclusion from premises. It is to be noted that according to नैगमनय different things have different natures, such as, नित्यत्व or अनित्यत्व, that is, some are नित्य and some are अनित्य not that *one* and the same thing may have

different aspects such as नित्यत्व and अनित्यत्व. The latter is the 'प्रमाण' or whole view, while the former is only a नय or part-view.

'व्यवहारनय' is the common-sense or popularly accepted view of things. Thus the commonly accepted view which speaks of प्रमाण, प्रमेय, and प्रमिति is an example of व्यवहारनय. (लोकप्रतीतापथानुसारेण प्रतिपत्तिगौरवपरिहारेण प्रमाण-प्रमेय-प्रमिति-प्रतिपादनं व्यवहारप्रसिद्ध्यर्थं परीक्षकैः समाश्रितमिति व्यवहारनयाभिप्रायः —Com.): So far we have been dealing with द्रव्यास्तिकनय. Next we come to षाण्मासिक. ऋजुसूत्र is the naive view which takes note of what appears to be only now and here (देशकालान्तर-संबद्धस्वभावरहितं वस्तुतत्त्वं सांप्रतिकमेकस्वभावमकुटिलं ऋजु सूत्रयतीति ऋजुसूत्रः—Com.). The Buddhist क्षणभङ्गवाद view that all reality is क्षणिक, is an example of this kind. It arises from confining the attention to things here and now, that is, क्षणs. Similary विज्ञानमात्रवाद—another Buddhist view—which attempts to avoid all the difficulties of epistemology by regarding ideas as the only reals may be looked upon as ऋजुसूत्र. Or, one may get rid of even this trouble, that of affirming the reality of विज्ञान, and thus hold the simplest of all doctrines, viz. शून्यवाद. The first it the doctrine of Buddhist realists, सौत्रान्तिक and वैभाषिक; the second of the योगाचार; and the third of the माध्यमिक.

Next, शब्दनयः—"शब्दनयश्च ऋजुसूत्राभिमतपर्यायात् शुद्धतरं पर्यायं स्व-विषयत्वेन व्यवस्थापयति । तथाहि—तटः, तटी, तटम् इति विरुद्धलिङ्गलक्षणधर्मा-कान्तं भिन्नमेव वस्तु, नहि तत्कृतं धर्मभेदमननुभवतस्तत्सबन्धो युक्तः। तद्धर्मभेदे वा स्वयं धर्मी कथं न भिद्यते ?......एकस्मिन्नुदकपरमाणौ आपः इति बहुत्वसंख्याया निर्देशोऽनुपपन्नः ॥ न ह्येकत्वसंख्यासमाध्यासितं तदेव विरुद्धबहुत्वसंख्योपेतं भवतीत्येकसंख्ययैव तन्निर्देष्टव्यम् । कालभेदाद्वस्तुभेदः ऋजुसूत्रेणाप्यभ्युपगम्यत एव ।...विरमति इति न युक्तः । आत्मार्थतायां हि विरमते इत्यस्यैव प्रयोगसंगतेः। न चैवं लोकशास्त्रव्यवहारविलोप इति वक्तव्यम् । सर्वत्रैव नयमते तद्विलोपस्य समानत्वात् । इति यथार्थशब्दनात् शब्दनयो व्यवस्थितः ।"

It will be noticed that शब्दनय insists upon punctiliousness of language so much so that it would not permit the use of the plural 'आपः' for a drop of water or even 'विरमति' (although

grammatically sound ) instead of 'विरमते' where the क्रिया is आत्मने. Of course, this would involve a great deal of revolution in the use of words, but this is necessary if we are to avoid looseness of language and secure complete correspondence between language and things, expression and things expressed. ऋजुसूत्र recognises the distinctions made by time; शब्दनय recognises distinctions due to language. Moreover, it frankly admits that in doing so it has frequently to override व्यवहार.

समभिरूढ—carries the punctiliousness of language still further (शुद्धतर). It recognises differences of things corresponding to those of synonyms. "एकसंज्ञासमभिरोहणात् समभिरूढस्त्वाह यथा हि विरुद्धलिङ्गादियोगाद् भिद्यते वस्तु तथा संज्ञाभेदादपि। तथाहि—संज्ञाभेदः प्रयोजनवशात् संकेतकर्तृभिर्विधीयते न व्यसनितया। अन्यथाऽनवस्थाप्रसक्तेः। ततो यावन्तो वस्तुनः स्वाभिधायकाः शब्दास्तावन्तोऽर्थभेदाः। नैकस्यार्थस्यानेकेनाभिधानं युक्तम्।...क्रियाशब्दत्वाद्वा सर्वशब्दानां सर्वेऽप्यन्वर्था एव वाचकाः।"

"एवंभूतः शब्दाभिधेयक्रियापरिणतिवेलायामेव तद्वस्तु इति भूत एवंभूतः प्राह—यथा संज्ञाभेदाद् भेदवद् वस्तु तथा क्रियाभेदादपि। सा च क्रिया तद्वेत्री यदैव तामाविशति तदैव तन्निमित्तं तत्तद्व्यपदेशमासादयति नान्त्यदेत्यतिप्रसङ्गात्। "तथाहि यदा घटते तदैवासौ घटः॥" *i. e.* एवंभूत goes even beyond समभिरूढ. While the latter insists upon recognising distinctions of things corresponding to distinctions of synonyms, एवंभूत would confine the word to the thing just while it performs the क्रिया which it connotes.

2. नय is thus characterised in the Râja-Vârtika: "प्रमाणप्रकाशितोऽर्थविशेषप्ररूपको नयः" which is explained as follows: "प्रकर्षेण मानं प्रमाणं सकलादेश इत्यर्थः। तेन प्रकाशितानां न प्रमाणाभासपरिगृहीतानामित्यर्थः। तेषामर्थानामस्तित्वनास्तित्वनित्यत्वाद्यन्तात्मनां जीवादीनां ये विशेषाः पर्यायास्तेषां प्रकर्षेण रूपकः प्ररूपकः।" Its primary varieties are said to be 'द्रव्यास्तिक,' and 'पर्यायास्तिक', also called 'द्रव्यार्थिक' and 'पर्यायार्थिक' which practically convey the same meanings. The words are explained as follows: द्रव्यमस्तीति मतिरस्य द्रव्यभवनमेव नातोऽन्ये भावविकाराः नाप्यभावस्तद्व्यतिरेकेणानुपलब्धेरिति द्रव्यास्तिकः। पर्याय एवास्ति इति मतिरस्य जन्मादिभावविकारमात्रमेव भवनं न ततोऽन्यद् द्रव्यमस्ति तद्व्यतिरेकेणानुपलब्धेरिति पर्यायास्तिकः॥ अथवा द्रव्य-

मेवार्थोऽस्य न गुणकर्मणी तदवस्थारूपादिति द्रव्यार्थिकः । पर्याय एवार्थोऽस्य रूपाद्युत्क्षेपणादिलक्षणादिलक्षणो न ततोऽन्यद् द्रव्यमिति पर्यायार्थिकः । अथवा अर्यते गम्यते निष्पाद्यत इत्यर्थः । कार्यं द्रवति गच्छतीति द्रव्यं कारणम् । द्रव्यमेवार्थोऽस्य कारणमेव कार्यं नार्थान्तरं, न च कार्यकारणयोः कश्चिद्रूपभेदः तदुभयमेकाकारमेव पर्वाङ्गुलिद्रव्यवदिति द्रव्यार्थिकः । परि समन्ताद् आयः पर्यायः । पर्याय एवार्थः कार्यमस्य न द्रव्यमतीतानागतयोर्विनष्टानुत्पन्नत्वेन व्यवहाराभावात् स एवैकः कार्यकारणव्यपदेशभागिति पर्यायार्थिकः । अथवाऽर्थनमर्थः प्रयोजनं द्रव्यमेवार्थोऽस्य प्रत्ययाभिधानानुप्रवृत्तिलिङ्गदर्शनस्य निह्नोतुमशक्यत्वादिति द्रव्यार्थिकः । पर्यायोऽर्थः प्रयोजनमस्य वाग्विज्ञानव्यावृत्तिनिबन्धव्यवहारप्रसिद्धेरिति पर्यायार्थिकः ॥

Next the नयs are classified and defined as follows:

(1) अर्थसंकल्पमात्रग्राही नैगमः—which is explained thus: निगच्छन्त्यस्मिन्निति निगमनमात्रं वा निगमः, निगमे कुशलो भवो वा नैगमः तस्य लोके व्यापारः. निगम means that to which one goes, *i. e.* object aimed at, the idea of an object ( अर्थसंकल्पमात्र ) as distinguished from its accomplishment; the end, purpose, intention, objective. नैगमनय—is a statement with reference to the objective. It is illustrated thus: अर्थसंकल्पमात्रग्रहणं प्रस्थेन्द्रगृहगम्यादिषु—तद्यथा कंचित् प्रगृह्य परशुं पुरुषं गच्छन्तमभिसमीक्ष्याह किमर्थं गच्छति भवान् इति स तस्मै व्याचष्टे प्रस्थार्थमिति । तथा इन्द्रगृहादावपि । तथा कतरोऽत्र गमीत्युक्ते आचष्टे अहं गमीति संप्रत्यगच्छत्यपि गमीति व्यवहारः *e. g.* A man goes out, axe in hand, to fell a tree, take some wood out of it and make a प्रस्थ ( a wooden measure for measuring grain ). When asked 'why are you going?' he answers 'for a प्रस्थ.' Now here the immediate object of going is to cut a tree, but he says "for a प्रस्थ"—which is done with reference to the final purpose of going.

(2) स्वजात्यविरोधेनैकत्वोपनयात् समस्तग्रहणं संग्रहः—'संग्रह' is that in which many are *collected into one* without contradicting their own nature *e. g.* when one says सद्द्रव्यं घटः—the द्रव्यत्व ( स्वजाति ) of घट is not denied, but it is subsumed under the higher category of सत्; similarly, all the घटs whether made of gold or clay may be called by the class-name घट, which does not deny the individual natures of different घटs and yet brings

together all the घटs and calls them by a class-name, घट. ( घट इति चोक्ते नामादिभेदान्मृत्सुवर्णादिकारणविशेषाद्वर्णसंस्थानादिविकाराच्च भिन्नानां घटशब्दवाच्यानां तदव्यतिरेकत्वेन संग्रहः " )

(3) अतो विधिपूर्वकमवहरणं व्यवहारः—When without denying the general ( संग्रह ) one specifies a particular, for that alone would serve his purpose, the नय is called व्यवहार. ( वि=विधिपूर्वकम्+अवहरणम् )—taking out ( अवहरणं ) a part from the class, affirmatively ( विधिपूर्वकम् ) that is, without denying the truth of संग्रह. The necessity and scope of this नय are thus explained in detail: सर्वसंग्रहेण यत्संगृहीतं तच्चानपेक्षितविशेषं नालं संव्यवहारायेति व्यवहारनय आश्रीयते ।—यत् सत् तद् द्रव्यं गुणो वेति। द्रव्येणापि च संग्रहाक्षिप्तेन जीवाजीवविशेषानपेक्षेण न शक्यः संव्यवहार इति । जीवद्रव्यमजीवद्रव्यमिति वा व्यवहार आश्रीयते। जीवाजीवावपि च संग्रहाक्षिप्तौ नालं संव्यवहारायेति प्रत्येकं देवनारकादिर्घटादिश्च व्यवहारेणाश्रीयते। कषायो भैषज्यमित्युक्ते च सामान्यस्य विशेषात्मकत्वान्नैयग्रोधादिविशेषसामर्थ्यं नहि शक्यः प्रभुणापि चक्रभृता सर्वः कषायसमाहारः कर्तुम्। नामस्थापनाद्रव्याणि च संग्रहोपात्तानि नालं व्यवहारायेति भाव एव गृह्यते। एवमयं नयस्तावद्वर्तते यावत् पुनर्नास्ति विभागः।

This detail shows that व्यवहार is the opposite of संग्रह, and takes note of the particular instead of the general which is the viewpoint of संग्रह.

(4) सूत्रपातवदृजुसूत्रः—यथा ऋजुः सूत्रपातस्तथा ऋजु प्रगुणं सूत्रयति तन्त्रयति ऋजुसूत्रः। सर्वांस्त्रिकालविषयानतिशय्य वर्तमानविषयकालमादत्ते। ऋजुसूत्र *i. e.* the straight or direct point of view, which takes note of the present only, for this alone is directly the object of knowledge.

(5) ( शब्दः ) स च लिङ्गसंख्यासाधनादिव्यभिचारनिवृत्तिपरः—'शब्द' is the नय which insists upon accuracy of language. It tolerates no looseness of language in point of gender, number etc. if it conflicts with reality, not even if it be allowed by grammar. ( See the examples given above. )

(6) नानार्थसमभिरोहणात् समभिरूढः—यतो नानार्थान् समतीत्यैकमर्थमाभिमुख्येन रूढस्ततः समभिरूढः। कुतः वस्त्वन्तरासंक्रमेण तन्निष्ठत्वात्।...... एकस्यार्थस्यैकेन गतत्वात् पर्यायशब्दप्रयोगोऽनर्थकः शब्दभेदश्चेदस्ति अर्थ-

भेदेनाप्यवश्यं भवितव्यमिति । नानार्थसमभिरोहणात् समभिरूढः । इन्दनादिन्द्रः, शकनाच्छक्रः, पूर्दारणात् पुरन्दर इत्येवं सर्वत्र ॥ अथवा यो यत्राभिरूढः स तत्र समेत्याभिमुख्येनारोहात् समभिरूढः ।

Synonyms connote differences of meaning, and so they should be employed with strict adherence to their connotation. This is the point of view of 'समभिरूढ'—*i. e.* the presentation of the connotation before the mental eye.

(7) येनात्मनाभूतस्तेनैवाध्यावसाययतीत्येवंभूतः। which is explained: येनात्मना येनाभिधेयेन भूतः शब्दस्तेनैवाध्यवसाययति । यथेन्द्रशब्दः परमेश्वरत्वाभिधेयः स परिणामो यत्र यदा वर्तते तत्र तदैव युक्तो न नामस्थापनाद्रव्येषु तत्परिणामाभावात् । इत्येवमितरेष्वपि शब्देषु स्वाभिधेयक्रियापरिणतिक्षण एव युक्तिर्नान्यदेति ॥ अथवा येनात्मना येन स्वरूपेण भूतोऽर्थस्तेनैवाध्यवसाययति यथा गच्छतीति गौरिति यदैव गच्छति तदैव गौरिति न स्थितो न शयित इति । पूर्वोत्तरकालयोस्तदर्थाभावात् दण्डिवत् ॥ अथवा येनात्मना येन ज्ञानेन भूतः परिणतस्तेनैवाध्यवसाययति यथेन्द्राग्निज्ञानपरिणत आत्मैवेन्द्रोऽग्निश्चेत्येवं भूतार्थप्रत्यायनाच्छब्द एवंभूतः तत्कार्यीत्ताच्छब्द्यसिद्धेः ॥

3. The author of the Tattvârtha-S'loka-Vârtika observes:

सामान्यादेशतस्तावदेक एव नयः स्थितः ।
स्याद्वादप्रविभक्तार्थविशेषव्यञ्जनात्मकः ॥ I. 33.

—In its most general form, नय is but one, and it consists of the presentation of a particular truth—which is part of the comprehensive truth which is expressed in स्याद्वाद. He next divides them into two main types: संक्षेपाद् द्वौ विशेषेण द्रव्यपर्याय-गोचरौ ॥ *i. e.* द्रव्य and पर्याय (the latter including गुण)—of which the first comprises the three नैगम, संग्रह and व्यवहार, and the second the remaining four, ऋजुसूत्र, शब्द, समभिरूढ and एवंभूत. The term 'नय' is explained thus: नीयते गम्यते येन श्रुतार्थांशो नयो हि सः ।—*i. e.* that by which *part* of the truth is conveyed. The different नयs mentioned in the Tattva-Sûtra (I. 33) spring from the two primary नयs, द्रव्य° and पर्याय° (प्रमाणगोचरार्थांशा नीयन्ते यैरनेकधा । ते नया इति व्याख्याता जाता मूलनयद्वयात्). The author rejects the view of those who hold that there are four नयs, सामान्य° and विशेष being added to द्रव्य° and पर्याय. The ground for the rejection is that they are included in द्रव्य and

पर्याय. Next, 'नैगम' is defined तत्र संकल्पमात्रस्य ग्राहको नैगमो नयः and is explained in two ways: (1) संकल्पो निगमस्तत्र भवोऽयं तत्प्रयोजनः *e.g.* तथा प्रस्थादिसंकल्पः तदभिप्राय इष्यते, and (2) यद्वा नैकंगमो योऽत्र स सतां नैगमो मतः। It is distinct from संग्रह and व्यवहार; for these refer only to a part of नैगम—संग्रहे व्यवहारे च नान्तर्भावः समीक्ष्यते। नैगमस्य, तयोरेकवस्त्वंशप्रवणत्वतः। नैगम being thus shown to be indispensable, the total number of नयs is seven and not six as some have urged. Others, again, speak of nine नयs thus:—पर्यायनैगमः, द्रव्यनैगमः, द्रव्यपर्यायनैगमश्चेति। तत्र प्रथमस्त्रेधा अर्थपर्यायनैगमो व्यञ्जनपर्यायनैगमोऽर्थव्यञ्जनपर्यायनैगमश्चेति। द्वितीयो द्विधा। शुद्धद्रव्यनैगमः, अशुद्धद्रव्यनैगमश्चेति। तृतीयश्चतुर्धा शुद्धद्रव्यार्थपर्यायनैगमः, शुद्धद्रव्यव्यञ्जनपर्यायनैगमः, अशुद्धद्रव्यार्थपर्यायनैगमः, अशुद्धद्रव्यव्यञ्जनपर्यायनैगमश्चेति नवधा नैगमः। संग्रहादयस्तु वक्ष्यमाणा षडिति पञ्चदश नयाः समासतः प्रतिपत्तव्याः।

Next coming to संग्रह, the term is thus defined and explained

एकत्वेन विशेषाणां ग्रहणं संग्रहो नयः।
सजातेरविरोधेन दृष्टेष्टाभ्यां कथंचन ॥
समेकीभावसम्यक्त्वे वर्तमानो हि गृह्यते।

Next is व्यवहार, which is defined and explained as in the Râjavârtika:—

संग्रहेण गृहीतानामर्थानां विधिपूर्वकः।
योऽवहारो विभागः स्याद्व्यवहारो नयः स्मृतः।

Next ऋजुसूत्र—

"ऋजुसूत्रं क्षणध्वंसि वस्तु सत् सूत्रयेदृजु।
प्राधान्येन गुणीभावाद् द्रव्यस्यानर्पणात् सतः।

Next शब्दनय—

"कालादिभेदतोऽर्थस्य भेदं यः प्रतिपादयेत्।
सोऽत्र शब्दनयः शब्दप्रधानत्वादुदाहृतः ॥"

Lastly, समभिरूढ—

"पर्यायशब्दभेदेन भिन्नार्थस्याधिरोहणात्।"

नयः समभिरूढः स्यात्। *e. g.* इन्द्रः पुरन्दरः शक्र इत्याद्या भिन्नगोचराः। शब्दा विभिन्नशब्दत्वाद्वाजिवारणशब्दवत्—*i. e.* synonyms are really words with different meanings.

In conclusion, the division of नयs into शब्दनयs and अर्थनयs and their comparative extents are thus stated in the T. S'l. Vârtika:

तत्रर्जुसूत्रपर्यन्ताश्चत्वारोऽर्थनयाः स्मृताः ।
त्रयः शब्दनयाः शेषाः शब्दवाच्यार्थगोचराः ॥
पूर्वपूर्वनयो भूमविषयः कारणात्मकः ।
परः परः पुनः सूक्ष्मगोचरो हेतुमानिह ॥
सन्मात्रविषयत्वेन संग्रहस्य न युज्यते ।
महाविषयताभावाभावार्थान्नैगमान्नयात् ॥
यथा हि सति संकल्पस्तथैवासति वेद्यते ।
तत्र प्रवर्तमानस्य नैगमस्य महार्थता ॥
संग्रहाद्व्यवहारोऽपि सद्विशेषावबोधकः ।
न भूमविषयो शेषसत्समूहोपदर्शितः ॥
नर्जुसूत्रप्रभूतार्थो वर्तमानार्थगोचरः ।
कालत्रितयवृत्त्यर्थगोचराद्व्यवहारतः ॥
कालादिभेदतोऽप्यर्थमभिन्नमुपगच्छतः ।
नर्जुसूत्रान्महार्थोऽत्र शब्दस्तद्विपरीतवत् ॥
शब्दात् पर्यायभेदेनाभिन्नमर्थमभीप्सितः ।
न स्यात् समभिरूढोऽपि महार्थस्तद्विपर्ययः ॥
क्रियाभेदेऽपि चाभिन्नमर्थमभ्युपगच्छतः ।
नैवंभूतः प्रभूतार्थो नयः समभिरूढतः ॥

The Tattva S'l. Vârtika applies the principle of सप्तभङ्गी to the नयs—which is detailed in the commentary as follows:

इह तावन्नैगमस्य संग्रहादिभिः सह षड्भिः प्रत्येकं षट् सप्तभङ्ग्यः संग्रहस्य व्यवहारादिभिः सह वचनात्। पंच व्यवहारस्य। ऋजुसूत्रादिभिश्चतस्रः ऋजुसूत्रस्य शब्दादिभिस्तिस्रः, शब्दस्य समभिरूढादिभ्यां द्वे, समभिरूढस्यैवंभूतेनैका, इत्येकविंशतिमूलनयसप्तभङ्ग्यः ।

4. Siddharṣi's commentary on the Nyâyâvatâra of Siddhasena Divâkara deals with the subject of नयs in full detail, and like the commentary on the Saṁmatitarka, it shows how the different systems of Brâhmaṇa and Bauddha philosophy represent particular नयs or partial viewpoints only, that is to say, they are नयs and not प्रमाण. See—

अनेकात्मकं वस्तु गोचरः सर्वसंविदाम् ।
एकदेशविशिष्टोऽर्थः नयस्य विषयो मतः ॥

Nyâyâvatâra, 29.

...एतेनास्य हेतोः कापिला अप्यसिद्धतादिदोषमभिधित्सवो मौक्यमानीताः ..................॥ तथा सुगतमतानुसारिणामपि मध्ये सौत्रान्तिकस्तावदस्य हेतोरसिद्धतामाविर्भावयितुं नोत्सहते, तदभ्युपगतिव्यतिरेकेण निजदर्शनव्यवस्थानुपपत्तेः..........॥

तथोररीकृतयोगाचारमतमपि बलादनेकान्तप्रकाशरज्जुरावेष्टयति एकस्यापि ज्ञानस्यानेकवेद्यवेदकाकारतया प्रथनोपगतेः।.........॥

शून्यवादिनः समस्ताभावादसिद्धोऽनेकान्तप्रकाश इति चेन्न, तस्यापि प्रमाणप्रमेयाभावेन सर्वाभाववेदनं समस्ति, अन्यथाऽप्रमाणकं सर्वं सर्वत्र विद्यते इति परस्यापि वदतो न वदनभङ्गः स्यात्, तदभ्युपगमेऽभ्युपगमक्षतिः।...........

नयस्तर्हि किंभूतं मन्यते इति वचनावकाशे सत्याह एक इत्यादि। अनन्तधर्माध्यासितं वस्तु स्वाभिप्रेतैकधर्मविशिष्टं नयति प्रापयति संवेदनमारोहयतीति नयः प्रमाणप्रवृत्तेरुत्तरकालभावी परामर्श इत्यर्थः। तस्य विषयो गोचरोऽभिमतः अभिप्रेतैकदेशेनानित्यत्वादिधर्मलक्षणेन विशिष्टः पररूपेभ्यो व्यवच्छिन्न इत्यर्थः॥...

ननु चादिवाक्यतः प्रमाणव्युत्पादनमात्रं प्रतिज्ञातं तत् किमयमप्रस्तुतोऽत्र नयगोचरः प्रतिपाद्यत इति।

न नयः प्रमाणादत्यन्तं दूरयायी; किं तर्हि? तदंशभूत एव; नयसमुदायसंपाद्यत्वात् प्रमाणस्य, अतस्तद्व्युत्पादनप्रतिज्ञातेऽसावपि तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति न्यायाद् गृहीत एव तन्नायमप्रस्तुत इति तत्र प्रमाणप्रतिपन्नार्थैकदेशपरामर्शो नय इति लक्षणम्। सर्वनयविशेषानुयायित्वात् पररूपव्यावर्तनक्षमत्वाच्चास्य। संख्यया पुनरनन्ता इति। अनन्तधर्मत्वाद्वस्तुनः, तदेकदेशधर्मपर्यायावसिताभिप्रायाणां च नयत्वात्। तथापि चिरंतनाचार्यैः सर्वसंग्राहिसत्ताभिप्रायपरिकल्पनाद्वारेण सप्त नयाः प्रतिपादिताः। तद्यथा—नैगमसंग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवंभूता नया इति। अतोऽस्माभिरपि त एव वर्ण्यन्ते। कथमेते सर्वाभिप्रायसंग्राहका इति चेत् उच्यते। अभिप्रायस्तावदर्थद्वारेण शब्दद्वारेण वा प्रवर्तेत, गत्यन्तराभावात्। अर्थश्च सामान्यरूपो विशेषरूपो वा। शब्दोऽपि रूढितो व्युत्पत्तितश्च। व्युत्पत्तिरपि सामान्यनिमित्तप्रयुक्ता तत्कालभाविनिमित्तप्रयुक्ता वा स्यात्। तत्र ये केचनार्थनिरूपणप्रवणाः प्रमात्रभिप्रायास्ते सर्वेऽप्याद्ये नयचतुष्टयेऽन्तर्भवन्ति। तत्रापि ये परस्परविशकलितौ सामान्यविशेषाविच्छन्ति तत्समुदायरूपो नैगमः। ये पुनः केवलं सामान्यं वाञ्छन्ति तत्समूहसंपाद्यः संग्रहः। ये पुनरनपेक्षितशास्त्रीयसामान्यविशेषं लोकव्यवहारमवतरन्तं

घटादिकं पदार्थमभिप्रेयन्ति तन्निचयजन्यो व्यवहारः। ये सौगतास्तु क्षणक्षयिणः परमाणुलक्षणा विशेषाः सत्या इति मन्यन्ते तत्संघातघटित ऋजुसूत्र इति। तथा ये मीमांसकाः रूढितः शब्दानां प्रवृत्तिं वाञ्छन्ति तन्निवहसाध्यः शब्द इति। ये तु व्युत्पत्तितो ध्वनीनां प्रवृत्तिं वाञ्छन्ति नान्यथा, तद्द्वारजन्यः समभिरूढ इति। ये तु वर्तमानकालभाविव्युत्पत्तिनिमित्तमधिकृत्य शब्दाः प्रवर्तन्ते नान्यथेति मन्यन्ते तत्संघटितः खल्वेवंभूत इति। तदेवं न स कश्चन विकल्पोऽस्ति वस्तुगोचरो योऽत्र नयसप्तके नान्तर्यातीति सर्वाभिप्रायसंग्राहका एते इति स्थितम्॥

Since the different systems of Bauddha and Brâhmaṇa philosophy arise, as shown above, from the fact that their teachers have failed to see things whole, it follows that their teachings are not प्रमाण. If so, a question arises: Why has the subject of partial viewpoints—called नय—been discussed here, in connection with प्रमाण? The answer given is: Because नय, though wrong ( अप्रमाण ) as statements of whole truth, do deal with part truth, ( प्रमाणप्रतिपन्नार्थैकदेशपरामर्शो नयः ), and so come to be considered in the chapter on प्रमाण. Siddharṣi next proceeds to show how all 'अभिप्राय's or truths which the different systems purport to convey are embraced in the classification of नय which is here given. Thus, अभिप्राय-स्तावदर्थद्वारेण शब्दद्वारेण प्रवर्तेत। Next, अर्थश्च सामान्यरूपो विशेषरूपो वा। P. N. T. [ These—सामान्य and विशेष—again may be taken as independent of each other (विशकलितौ—severed, distinct,) or only one of them may be recognised and the other overlooked, or only the popular view—as distingnished from the logical view—of सामान्य and विशेष—may be accepted. ] Similarly, शब्दोऽपि रूढितो व्युत्पत्तितश्च। व्युत्पत्ति, again, may be सामान्यनिमित्त-प्रयुक्ता or तत्कालभाविनिमित्तप्रयुक्ता. Thus will arise the different नयs.

5. भवन्ति नैगमादयः—उक्तं च "नैगमसंग्रहव्यवहारऋजुसूत्रशब्दसमभिरूढैवंभूता नयाः"। एते च द्रव्यास्तिकपर्यायास्तिकलक्षणे नयद्वयेऽन्तर्भाव्यन्ते। द्रव्यमेव परमार्थतोऽस्ति न पर्याया इत्यभ्युपगमपरो द्रव्यास्तिकः। पर्याया एव वस्तुतः सन्ति न द्रव्यमित्यभ्युपगमपरः पर्यायास्तिकः। तत्राद्यास्त्रयो द्रव्यास्तिकाः, शेषास्तु पर्यायास्तिकाः। पुनर्द्रव्यास्तिकोऽपि सामान्यतो द्विविधो विशुद्धोऽविशुद्धश्च। तत्र नैगमव्यवहाररूपोऽविशुद्धः संग्रहरूपस्तु विशुद्धः। कथम्?। यतो नैगम-व्यवहारावनन्तपरमाण्वनन्तद्व्यणुकाद्यनेकव्यक्त्यात्मकं कृष्णाद्यनेकगुणाधारं त्रिकाल-

विषयं वाऽविशुद्धं द्रव्यमिच्छतः। संग्रहश्च परमाण्वादिकं परमाण्वादिसाम्यादेकं तिरोभूतगुणकलापमविद्यमानपूर्वापरविभागं नित्यं सामान्यमेव द्रव्यमिच्छति। एतच्च किलानेकताद्यभ्युपगमकलङ्केनाकलङ्कितत्वाच्छुद्धम्। ततः शुद्धद्रव्याभ्युपगमपरत्वादयमेव शुद्धः॥—अनुयोगमलधारीया. Com. on अनुयोग. This illustrates the नयs in their relation to the problem of the nature of substance and forms or modes.

6. "निलयनप्रस्थके"त्यादि—तत्र निलयनं वसनमित्यनर्थान्तरम्। तद्दृष्टान्तो यथा—कश्चित् केनचित् पृष्टः क्व वसति भवान्? स प्राह—लोके। तत्रापि जम्बूद्वीपे, तत्रापि भरतक्षेत्रे, तत्रापि मध्यमखण्डे, तत्राप्येकस्मिन् जनपदे नगरे गृहे इत्यादीन् सर्वानपि विकल्पान् नैगम इच्छति॥ प्रस्थको धान्यमानविशेषः तद्दृष्टान्तो यथा—सद्योग्यं काष्ठं वृक्षावस्थायामपि तदनुकीर्तिकं स्कन्धे कृतं गृहमानीतमित्यादि सर्वास्वप्यवस्थासु नैगमः प्रस्थकमिच्छति। ग्रामोदाहरणं यथा—विवक्षितग्रामवास्तव्यप्रधानकतिपयपुरुषदर्शनेऽपि ग्रामोऽत्रावितीच्छति नैगमः॥ "भमराइ गाहा"। इह भ्रमरकोकिलादिः कृष्णतयोपलभ्यमानोऽपि निश्चयमतेन पञ्चवर्णः, शेषवर्णचतुष्टयं हि न्यग्भूतत्वात्तत्र न दृश्यते न पुनर्नास्तीति प्रतिपद्यतेऽसौ। तथा प्रज्ञप्तिः—"भमरेणं भंते! कइवण्णे कइगंधे कइरसे कइफासे? गौतमा—इत्थं दो नया कज्जंति। तं जहा—निच्छनए य वावहारियनए अ। वावहारिअनयस्स कालए भमरे, निच्छनयस्स पंचवण्णे दुगंधे पंचरसे अट्ठफासे" इत्यादि। एवं नीललोहितपीतशुक्लतया व्यवहारतोऽवगतेष्वपि वस्तुषु निश्चयतः पञ्चवर्णताऽवगन्तव्या। तदेवं भ्रमरादौ निश्चयनयमतेन पञ्चवर्णे निश्चिते सति व्यवहारस्य को निश्चयार्थ इत्याह—"सो विणिच्छयत्थो त्ति" स विनिश्चयार्थ इति ज्ञेयः।......। यस्मिन् वा कस्मिंश्चिदर्थे जनपदस्य गोपालाङ्गनादिरूपस्य नामस्थापनाद्रव्यभावानामन्यतररूपेण वा निश्चयः समुत्पद्यते स विनिश्चयार्थः।......। अन्येषु सत्स्वपि बहुष्वंशेषु गोपालाङ्गनादिजनपदस्योद्भूतशक्तितया यो ग्राह्योंऽशः स विनिश्चयार्थः। तदर्थं व्रजति व्यवहार इति गाथार्थः। यस्मिन्नेवांशे जनपदस्य निश्चयो भवति किमित्यसौ तमेव गमयति सतोऽपि शेषांशान् मुञ्चतीत्याह—'बहुतर उत्ति य' इत्यादि। स एव बहुतरांशो यत्र जनपदस्य निश्चय उत्पद्यत इति तमेवांशं गमयति व्यवहारपथमवतारयति। येषु त्वंशेषु लोकस्य निश्चयो न भवति तान् सतोऽपि मुञ्चति व्यवहारो नयः- किं कुर्वन्?। लोकं लोकव्यवहारमिच्छन्। कया?। संव्यवहारपरतया, संव्यवहारस्वरूपत्वादेव तस्येति गाथार्थः। "प्रति प्रति वोत्पन्नमिति"। एकैकं स्वामिनमाश्रित्योत्पन्नम्। एतदेवाह। "भिन्नव्यक्ती"त्यादि। भिन्ना व्यक्तयः स्वामिन्यो यस्य तत्तथाभूतम्। ऋजुसूत्रो हि वर्तमानक्षणभाव्येव वस्त्विच्छति तदपि भिन्नव्यक्तिस्वामिकम्। तन्मतेन हि यद्देवदत्तस्य वित्तं तद् यज्ञदत्तस्यावित्तमेव तदपेक्षया वित्तकार्याकारणाद् यज्ञदत्तस्यापि यद्वित्तं तद्देवदत्तस्याप्यवित्तमेव तत एव हेतोः। तस्माद् द्वयोरपि वित्तयोभिन्नस्वाम्यपेक्षयैव वित्तत्वमिति भिन्नव्यक्तिस्वामिता। "ऋजुसूत्रः ऋजुश्रुतो वेति"। शब्दद्वयस्य यथाक्रमं व्युत्पत्तिमाह—"तत्र ऋजुवर्तमान" मित्यादि॥ "नामस्थापनाद्रव्यविरहेण समानलिङ्गवचनेत्यादि" लिङ्गं च

वचनं च लिङ्गवचने येषां ते च ते पर्यायध्वनयश्च-इन्द्रः शक्रः पुरन्दर इत्यादयस्तद्वाच्यत्वेन च। तदनेनातिक्रान्तवक्ष्यमाणनयद्वयाद्भिन्नताऽस्य सूचिता। अतिक्रान्तनयो हि नामादिचतुर्विधमपि भिन्नलिङ्गवचनपर्यायध्वनिवाच्यमेव वस्त्विच्छति, अयं तु भावरूपमेव समानलिङ्गवचनपर्यायध्वनिवाच्यमेव च तदिच्छतीत्यनयोर्भेदः। वक्ष्यमाणस्त्वेकस्मिन् वस्तुन्येक एव ध्वनिः प्रवर्तते न समानलिङ्गवचना अपि बहव इत्यभिमंस्यते। अतो नयादप्यस्य भिन्नता। एवमन्येष्वपि नयेषु विशेषणानि यथासंभवपूर्वोत्तरनयभिन्नता सूचकत्वेन द्रष्टव्यानि। "तस्यार्थपरिग्रहादि"त्यादि तस्य प्राधान्येनाङ्गीकृतशब्दस्य वाच्यत्वेन संबन्धी योऽर्थो घटादिलक्षणस्तं परिगृह्णाति नयो ज्ञानविशेष इत्युपचारात् सोऽपि ज्ञानस्वरूपो नयः शब्द इत्युच्यते। "न च भिन्नेत्यादि" ननु भिन्नवचनत्वादेकत्वाभावे कुटवृक्षवदित्युदाहरणमसंगतम् कुटश्च वृक्षश्च कुटवृक्षौ ताविव कुटवृक्षवदिति। न ह्यत्र क्वचिद्वचनभेदोऽस्ति। सत्यम्। स्यादेतद् यद्येकवचनान्तपदद्वयस्यात्र समासोऽभिप्रेतः स्यात्। किंतु कुटश्च वृक्षौ चेति समस्य वतिः क्रियते इत्यस्ति वचनभेदः। ननु भवत्वेवं तथाप्ययुक्तमिदमुदाहरणम्। न ह्यत्र वचनाभेदेऽपि कुटवृक्षशब्दयोः पर्यायता युज्यते। भिन्नजातीयवस्तुवाचकत्वात्। तथाहि—कुटशब्देन घट उच्यते वृक्षशब्देन तु शाखादिमान् पदार्थः तत्कुतो वचनाभेदेऽप्यनयोः पर्यायशब्दता ?। नैवम्। भिन्नजातीयवस्तुवाचित्वादित्यस्यासिद्धत्वात्। यतः कौ पृथिव्यामटतीति व्युत्पत्तेः कुटशब्देन वृक्ष एवात्र विवक्षित इत्यनयोः पर्यायशब्दता। क्वचित्तु कूटवृक्षवदिति पाठस्तत्रनिर्विवादं कूटशब्देन वृक्ष एवाभिधीयत इति। अस्माकं तावदयं संप्रदायः, सुधिया त्वन्यथापि भाव्यमिति॥ "न स्थानभरणक्रियामि"ति—स्थानस्थस्यैव भरणक्रिया स्थानभरणक्रिया तां न विशेषयतीत्यर्थः। यदा स्थानस्थित एव जलादिना भ्रियते तदा घटो न भवति किंतु योषिन्मस्तकारूढो जलाहरणचेष्टां कुर्वन्नेवेति भावार्थः॥ समाप्ता नयाः॥

—आवश्यक-हारिभद्रटिप्पणे नयाधिकारः

The importance of this long extract lies in the fact that the doctrine of **नय** is traceable to the Sûtras or Âgama. In the first few lines the illustrations of **नैगमनय** referred to in the Sûtras ( see our Text p. 162-168 St. XXVIII ) are explained in detail. These are old and obscure, but the commentator does his best to explain them. Next a very important point is introduced viz. the distniction between '**निश्चयनय**' and '**व्यवहारनयः**' that is the scientific view and the popular view. This corresponds to the distinction drawn in Vedânta betwen the points of view of **परमार्थ** and **व्यवहार**—which has also its parellel in Buddhism. A very interesting point, which is supported by an extract from the Prajñapati ( one of the Âgamas ), is

the strange doctrine that as a matter of absolute or scientific truth every object—*e. g.* even a black bee—possesses all the five colours but only one of them is patent—the black in the case of the bee—while the rest are latent. A simlar doctrine regarding the constitution of matter is held by Ramânujâcârya who says that when a piece of mother-of-pearl is mistaken for silver, it is because the silver is in the mother-of-pearl; and so is even a serpent in a rope!

7. नत्थि नयेहिं विहूणं सुत्तं अत्थोय जिणमए किंचि ।
आसज्ज उ सोयारं नयेणय विसारओ बूया ॥
[ =नास्ति नयैर्विहीनं सूत्रमर्थश्च जिनमते किंचित् ।
आसाद्य तु श्रोतारं नयेन च विशारदो ब्रूयात् ॥ ]

इति वचनाज्जिनमते सर्वेऽपि पदार्था नयैर्विचारणीयाः । इत्यतो द्रव्यमङ्गलमपि नयैर्विचारयन्नाह—

एगो मङ्गलमेगं णेगा णेगाइं णेगमनयस्स ।
संगहनयस्स एक्कं सव्वं चिय मंगलं लोए ॥
[ =एको मङ्गलमेकमनेकेऽनेकानि नैगमनयस्य ।
संग्रहनयस्यैकं सर्वमेव मङ्गलं लोके ॥ ]

वक्ष्यमाणशब्दार्थस्य नैगमनयस्य मतेनैकोऽनुपयुक्तो मङ्गलशब्दार्थप्ररूपक एकं द्रव्यमङ्गलम् । अनेके त्वनुपयुक्तास्तत्प्ररूपका अनेकानि द्रव्यमङ्गलानि । अयं हि नयः सामान्यं विशेषांश्चाभ्युपगच्छत्येव । तत्र विशेषवादिस्वपक्षे एकोऽनुपयुक्त एकं द्रव्यमङ्गलम् अनेके त्वनुपयुक्ता अनेकानि द्रव्यमङ्गलानीत्युपपद्यत एव, विशेषाणां पृथग् भिन्नत्वादिति। संग्रहनयस्य तु वक्ष्यमाणस्वरूपस्य केवलसामान्यवादिनो मतेन सर्वस्मिन्नपि लोके एकमेव द्रव्यमङ्गलम् । सर्वेषां द्रव्यमङ्गलत्वप्राप्तेः सामान्यस्य च त्रिभुवनेऽप्येकत्वात् । इति गाथार्थः ॥

एक्कं निच्चं निरवयवमक्कियं सव्वगं च सामन्नम् ।
निस्सामन्नत्ताओ नत्थि विसेसो खपुप्फं व ॥
[ =एकं नित्यं निरवयवमक्रियं सर्वगं च सामान्यम् ।
निःसामान्यत्वान्नास्ति विशेषः खपुष्पमिव ॥ ]

एकमद्वितीयत्वादेकसंख्योपेतं सामान्यम् । एकमपि क्षणिकं स्यात् । तत्राह—नित्यमनपायि । नित्यमप्याकाशवत् सावयवं स्यात्, तन्निरवयवत्वे सवितुरुदयास्तमनायोगात् । इत्यत्राह—निरवयवमनंशम् । पूर्वापरकोटिशून्यत्वादिति । निरवयवमपि परमाणुवत् सक्रियं स्यात् । अत आह—अक्रियं क्रियारहितं परिस्पन्दविनिर्मुक्तत्वादिति । अक्रियमपि दिगादिवत् सर्वगतं न स्यात् । अत्राह—सर्वगं च सकललोकाऽवाप्तसत्ताकम् । इदमित्थंभूतं सामान्यमेवाऽस्ति, न तु विशेषः कश्चनाऽपि विद्यते । कुत इत्याह—निस्सामान्यत्वात् सामान्यविरहितत्वात्, खपुष्पवत्, यच्चास्ति

तत् सामान्यविरहितं न भवति यथा घटः। तस्मादेकस्माद् द्रव्यमङ्गलसामान्या-द्व्यतिरिक्तत्वाद् तद्व्यतिरेके चाद्रव्यमङ्गलताप्रसङ्गात् सामान्यस्य च त्रिभुवनेऽप्येकत्वादेकमेव संग्रहनयमते द्रव्यमङ्गलम् इति स्थितम् ॥ इति गाथार्थः ॥

अत्र विशेषवादिनयमतस्थितः कश्चिदाह--ननु कथमनेकानि द्रव्यमङ्गलानि न संभवन्ति यथा हि वनस्पतिरित्युक्ते वृक्ष-गुल्म-लता-वीरुदादयो विशेषा एव प्रतीयन्ते न पुनस्तदतिरिक्तः कश्चिद् वनस्पति एवमिहापि द्रव्यमङ्गलमित्युक्तेऽनुपयुक्ततत्प्ररूपकलक्षणा विशेषा एवावगम्यन्ते न तु तदधिकं किंचित् सामान्यम् अतः किं शून्य इवास्मिन् जगत्येवमभिधीयते--'निस्सामन्नत्ताओ नत्थि विसेसो खपुष्फं व' इति. इति विशेषवादिना प्रोक्ते सामान्यवादी संग्रहः प्राह--ननु यत एव वनस्पतित्युरिक्ते वृक्षादयः प्रतीयन्ते अत एव ते तदनर्थान्तरभूताः हस्तस्येवाङ्गुलयः इह यस्मिन्नुच्यमाने यत् प्रतीयते तत् ततो व्यतिरिक्तं न भवति यथा हस्त इत्युक्तेऽङ्गुल्यादयः प्रतीयमाना हस्ताद् न व्यतिरिक्ताः प्रतीयन्ते च वनस्पतिरित्युक्ते वृक्षादयः इत्यमी न वनस्पतिव्यतिरिक्ताः ततो न सामान्यदतिरिक्तः कोऽपि विशेषः समस्ति। इत्येकमेव सर्वत्र द्रव्यमङ्गलमिति। अथोपपत्त्यन्तरेणाऽपि सामान्यवाद्येव वृक्षादीनां सर्वेषामपि वनस्पतिसामान्यरूपतां समर्थयन्नाह--

चूओ वणस्सइच्चिय मूलाइगुणो त्ति तस्समूहो व्व।
गुम्मादओ वि एवं सव्वे न वणस्सइविसिट्ठे॥
[=चूतो वनस्पतिरेव मूलादिगुण इति तत्समूह इव।
गुल्मादयोऽप्येवं सर्वे न वनस्पतिविशिष्टाः॥]

'चूतः' आम्रो वनस्पतिरेव वनस्पतिसामान्यं न व्यभिचरतीत्यर्थः इति प्रतिज्ञा। मूल-कन्द-स्कन्ध-त्वक्-शाखा-प्रवाल-पत्र-पुष्प-बीजादिगुणत्वादिति हेतुः चूतसमूहवदिति दृष्टान्तः इह यो यो मूलादिगुणः स स वनस्पतिसामान्यरूप एव यथा चूतसमूहः, मूलादिगुणश्च चूतः तस्माद् वनस्पतिसामान्यरूप एव। गुल्मादयोऽप्येवं वाच्याः। तथाहि--विशेषवादिना विशेषतयाऽभ्युपगम्यमानो गुल्मोऽपि वनस्पतिसामान्यरूप एव मूलादिगुणत्वात् गुल्मसमूहवत् इति। एवमन्येषामपि लतादिविशेषाणां वनस्पतिसामान्यादव्यतिरिक्तत्वं साधनीयम्। तद्व्यतिरेके सर्वत्र मृण्मयत्वादिप्रसङ्गो बाधकं प्रमाणम्। तस्मात् सामान्यमेवास्ति न विशेषाः॥ इति गाथार्थः॥

किं च—

सामान्नाउ विसेसो अन्नोऽणन्नो व होज्ज जइ अण्णो।
सो नत्थि खपुप्फं पिवऽणण्णो सामान्नमेव तयं॥
[=सामान्याद् विशेषोऽन्योऽनन्यो वा भवेत् यद्यन्यः।
स नास्ति खपुष्पमिव, अनन्यः सामान्यमेव तत्॥]

भो विशेषवादिन्! सामान्याद् विशेषोऽन्यो वा स्यात् अनन्यो वा इति विकल्पद्वयम्। यद्याद्यो विकल्पः तर्हि नास्त्येव विशेषः निःसामान्यत्वात् खपुष्पवत्—इह यद् यत् सामान्यविनिर्मुक्तं तत् तद् नास्ति यथा गगनारविन्दम्

सामान्यविरहितश्च विशेषवादिना विशेषोऽभ्युपगम्यते तस्माद् नास्त्येवायमिति। अथानन्य इति द्वितीयः पक्षः कक्षीक्रियते हन्त तर्हि सामान्यमेवाऽसौ तदनन्यत्वात् सामान्यात्मवत् यद् यस्मादनन्यत् तत् तदेव यथा सामान्यस्यैवात्मा अनन्यश्च सामान्याद् विशेषः इति सामान्यमेवायमिति। यदि चातिपक्षपातितया सामान्येऽपि विशेषोपचारः क्रियते तर्हि न काचित् क्वचित् क्षतिः न ह्युपचारेणोच्यमानो भेदस्तात्त्विकमेकत्वं बाधितुमलम् तस्मात् सामान्यमेवास्ति न विशेषः। इति संग्रहनयमतेन सर्वत्रैकमेव द्रव्यमङ्गलम्॥ इति गाथार्थः॥

तदेवं संग्रहेण स्वाभिमते सामान्ये प्रतिष्ठिते विशेषवादिनौ नैगमव्यवहारावाहतुः-

न विसेसत्थंतरभूअमत्थि सामण्णमाह ववहारो।
उवलंभववहाराभावाओ खरविसाणं व॥
[=न विशेषार्थान्तरभूतमस्ति सामान्यमाह व्यवहारः।
उपलम्भव्यवहाराभावात् खरविषाणमिव॥]

ननु भोः सामान्यवादिन् भवताऽपि वनस्पतिसामान्यं बकुलाशोक-चम्पक-नाग-पुन्नागा-म्र-सर्जार्जुनादिविशेषेभ्योऽर्थान्तरं वाऽभ्युपगम्येत अनर्थान्तरं वा। यद्यर्थान्तरं तर्हि नास्त्येव तद् विशेषव्यतिरेकेण उपलब्धिलक्षणप्राप्तस्य तस्योपलम्भव्यवहाराभावात् खरविषाणवत्। क एवमाह व्यवहारानयः उपलक्षणत्वाद् विशेषवादी नैगमश्च। एतौ हि लोकव्यवहारानुयायिनौ तद्व्यवहारश्च प्रायो विशेषनिष्ठ एव इति विशेषानेव समर्थयत इति भावः। अथानुपलब्धिलक्षणप्राप्तं तदभ्युपगम्यते तथाऽपि नास्ति विशेषेभ्यः सर्वथाऽन्यत्वात् गगनकुसुमवदिति। अथ विशेषेभ्योऽनर्थान्तरं तदिति द्वितीयपक्षः तर्हि विशेषा एव तत् तेभ्योऽनर्थान्तरभूतत्वात् विशेषाणामात्मस्वरूपवदिति। यदि च विशेषेष्वपि सामान्योपचारः क्रियते तर्हि न काचित् क्षतिः न ह्यौपचारिकमेकत्वं तात्त्विकमनेकत्वं बाधते॥ इति गाथार्थः॥

एतदेव समर्थयते

चूयाईएहिंतो को सो अण्णो वणस्सई नाम।
नत्थि विसेसत्थंतरभावाओ सो खपुप्फं व॥
[चूतादिभ्यः कः सोऽन्यो वनस्पतिर्नाम।
नास्ति विशेषार्थान्तरभावात् स खपुष्पमिव॥]

चूतादिभ्यो विशेषेभ्योऽन्यः को नाम वनस्पतिः यो व्रण-पिण्डी-पादलेपादिके लोकव्यवहारे उपयुज्येत न कोऽपीत्यर्थः। तस्मात् समस्तलोकसंव्यवहारानुपयोगित्वाद् नास्ति सामान्यम् खपुष्पवत् इति पूर्वोक्तमेवार्थं निगमनद्वारेणाह—'नत्थीत्यादि' तस्माद् नास्त्यसौ सामान्यवादिनाऽभ्युपगम्यमानो वनस्पतिः सद्रूपेभ्यो हि विशेषेभ्योऽर्थान्तरभावात् खपुष्पवत्। सद्रूपेभ्यो हि विशेषेभ्योऽर्थान्तरं भवत् असद्रूपमेव भवति तथाभूतं च नास्त्येव खपुष्पवत्॥ इति गाथार्थः॥

किं पुनः कारणं येन नैगमव्यवहारौ विशेषान् समर्थयतः इत्याह—

जं नेगमववहारा लोअव्ववहारतत्परा सो य।
पाएण विसेसमओ तो ते तग्गाहिणो दो वि ॥
[=यद् नैगमव्यवहारौ लोकव्यवहारतत्परौ स च।
प्रायेण विशेषमयस्तस्मात् तौ तद्ग्राहिणौ द्वावपि ॥ ]

यद् यस्माद् नैगमव्यवहारौ लोकव्यवहारतत्परौ स च लोकव्यवहारस्त्यागादानादिकः प्रायेण विशेषमयो विशेषनिष्ठ एव दृश्यते सामान्यस्य व्रणपिण्ड्यादौ लोकेऽनुपयोगात्। 'वनं' 'सेना' इत्यादौ क्वचित् कश्चित् कथंचित् सामान्यस्यापि दृश्यते उपयोगः, इति प्रायोग्रहणम्। यत एवं तस्मात् तौ नैगमव्यवहारौ द्वावपि तद्ग्राहिणौ विशेषाभ्युपगमपरौ ॥ इति गाथार्थः ॥

—विशेषावश्यक Commentary.

8. सिद्धसेनीयाः पुनः षडेव नयानभ्युपगतवन्तः। नैगमस्य संग्रहव्यवहारयोरन्तर्भावविवक्षणात्। तथाहि—यदा नैगमः सामान्यप्रतिपत्तिपरस्तदा स संग्रहेऽन्तर्भवति सामान्याभ्युपगमपरत्वात्। विशेषाभ्युपगमनिष्ठस्तु व्यवहारे। आह च सिद्धसेनीयमतमुपसंजिघृक्षुर्भाष्यकृत्—"जो सामन्नग्गाही स नेगमो संगहं गओ अहवा इयरो ववहारमिओ जो तेण समाणनिद्देसो।" ततः सिद्धसेनीयाभिप्रायेण षड्भिरेव नयैरागमतो द्रव्यमङ्गलविचारः कर्तव्यः न सप्तभिरिति ॥—Com. on विशेषावश्यक सूत्र.

9. Malliṣeṇa's Commentary contains a reproduction of the following Sûtras of Pramâṇanaya-tattvālokālaṁkāra—

स्पष्टं प्रत्यक्षम्। अनुमानाद्याधिक्येन विशेषप्रकाशनं स्पष्टत्वम् ( ii. 2,3 )। तद्द्विप्रकारम्—सांव्यवहारिकं पारमार्थिकं च ( ii. 4 )। संव्यवहारो बाधारहितप्रवृत्ति निवृत्ती प्रयोजनमस्येति सांव्यवहारिकं बाह्येन्द्रियादिसामग्रीसापेक्षत्वादपारमार्थिकम् अस्मदादिप्रत्यक्षमित्यर्थः। परमार्थे भवं पारमार्थिकं मुख्यम् आत्मसंनिधिमात्रापेक्षम् अवध्यादिप्रत्यक्षम्—Com. Note that सांव्यवहारिक is ordinary प्रत्यक्ष, while पारमार्थिक is extraordinary प्रत्यक्ष, no such distinction as that of the real and the unreal being implied, although the phraseology which is borrowed from Vedānta and Buddhism had this meaning. ] तत्राद्यं द्विविधम्—इन्द्रियनिबन्धनमनिन्द्रियनिबन्धनं च ( ii. 5 )। एतद् द्वितयमवग्रहेहावायधारणाभेदादेकशश्चतुर्विकल्पम् ( ii. 6 )। The text omits the definitions of अवग्रह etc. as being too well-known ('सुप्रतीतत्वात्'), but they may well be reproduced here: विषयविषयिसंनिपातानन्तरसमुद्भूतसत्तामात्रगोचरदर्शनाज्जातमाद्यमवान्तरसामान्याकारविशिष्टवस्तुग्रहणम<u>वग्रहः</u> ( ii. 7 )। अवगृहीतार्थविशेषाकाङ्क्षणम<u>ीहा</u> ( ii. 8 )।

ईहितविशेषनिर्णयोऽवायः ( ii. 9 )। स एव दृढतमावस्थापन्नो धारणा ( ii.10 )॥ पारमार्थिकं पुनरुत्पत्तावात्ममात्रापेक्षम् ( ii. 18 ) । [ क्षय-क्षयोपशम-विशेषविशिष्टमात्मद्रव्यमेवाव्यवहितं समाश्रित्य पारमार्थिकमेतदवध्यादिप्रत्यक्ष-मुन्मज्जति न पुनः सांव्यवहारिकमिवेन्द्रियादिव्यवहितमात्मद्रव्यमाश्रित्येति भावः—Com. ] तद्विकलं सकलं च ( ii. 19 )। तत्र विकलमवधिमनःपर्याय-ज्ञानरूपतया द्वेधा ( ii. 20 )। अवधिज्ञानावरणविलयविशेषसमुद्भवं भवगुणप्रत्ययं रूपिद्रव्यगोचरमवधिज्ञानम् ( ii. 21 )। संयमविशुद्धिनिबन्धनाद् विशिष्टावरण-विच्छेदाज्जातं मनोद्रव्यपर्यायालम्बनं मनःपर्यायज्ञानम् ( ii. 22 )। सकलं तु सामग्रीविशेषतः समुद्भूतसमस्तावरणक्षयापेक्षं निखिलद्रव्यपर्यायसाक्षात्कारिस्वरूपं केवलज्ञानम् ( ii. 23 )।

The subject goes back to the Tattvārthādhigama-sûtra, ( See T. Sûtra and T. Râja-Vārtika )—where मतिज्ञान is divided into इन्द्रियनिमित्त and अनिन्द्रियनिमित्त ( तदिन्द्रियानिन्द्रियनिमित्तम्— i. 14 ); इन्द्रियनिमित्तं स्पर्शनादीनां पञ्चानां स्पर्शादिषु पञ्चस्वेव स्वविषयेषु अनिन्द्रियनिमित्तं मनोवृत्तिरोघज्ञानं च। This is further subdivided into अवग्रहेहावायधारणाः ( i. 15 ), and each of these four is defined as follows: तत्राव्यक्तं यथास्वमिन्द्रियैर्विषयाणामालोचनावधारणमवग्रहः। अवग्रहो ग्रहो ग्रहणमालोचनमवधारणमित्यनर्थान्तरम्। निश्चयविशेषजिज्ञासा चेष्टा ईहा। ईहा ऊहा तर्कः परीक्षा विचारणा जिज्ञासेत्यनर्थान्तरम्। अवगृहीते विषये सम्यगसम्यगिति गुणदोषविचारणा अध्यवसायापनोदोऽवायः। अवायोऽपगम अपनोदः अपव्याधः अपेतमपविद्धमनुत्तमित्यनर्थान्तरम्। धारणा प्रतिपत्तिर्यथास्वं मत्यवस्थानमवधारणं च। धारणा प्रतिपत्तिरवधारणावस्थानं निश्चयोऽवमः अवबोध इत्यनर्थान्तरम्।

स्मरणप्रत्यभिज्ञानतर्कानुमानागमभेदतस्तत् पञ्चप्रकारम् (P.N.T. iii. 2)॥ तत्र संस्कारप्रबोधसंभूतमनुभूतार्थविषयं तदित्याकारं वेदनं स्मरणम् तत्तीर्थ-करबिम्बमिति यथा ( iii. 3, 4 )॥ अनुभवस्मृतिहेतुकं तिर्यगूर्ध्वतासामान्यादि-गोचरं संकलनात्मकं ज्ञानं प्रत्यभिज्ञानम्। यथा तज्जातीय एवायं गोपिण्डः गोसदृशो गवयः स एवायं जिनदत्त इत्यादि॥ ( iii. 5,6 ) [ तिर्यक्सामान्यं च गवादिषु गोत्वादिस्वरूपसदृशपरिणामात्मकम्। ऊर्ध्वतासामान्यं च परापरविवर्त-व्यापि मृत्स्नादिद्रव्यम्।—Com. संकलनं विवक्षितधर्मयुक्तत्वेन वस्तुनः प्रत्यवमर्शनम्—Com. ] उपलम्भानुपलम्भसंभवं त्रिकालीकलितसाध्यसाधन-संबन्धाद्यालम्बनमिदमस्मिन् सत्येव भवतीत्याद्याकारं संवेदनमूहापरनामा तर्कः ( iii. 7, 8 )। यथा यावान् कश्चिद् धूमः स सर्वो वह्नौ सत्येव भवतीति तस्मिन्न-सत्यसौ न भवत्येव। [ उपलम्भानुपलम्भाभ्यां प्रमाणमात्रेण ग्रहणाग्रहणाभ्यां

संभव उत्पत्तिर्यस्येति कारणकीर्तनम्। त्रिकालीकलितयोः कालत्रयीवर्तिनोः साध्यसाधनयोर्गम्यगमकयोः संबन्धोऽविनाभावो व्याप्तिरित्यर्थः स आदिर्यस्याशेषदेशकालवर्तिवाचकसंबन्धस्यालम्बनं गोचरः यस्य तत्तथेति विषयाविष्करणम्। इदमस्मिन् सत्येव भवतीत्यादिशब्दादिदमस्मिन्न सति न भवत्येवाकारं साध्यसाधनसंबन्धालम्बनम्। एवंजातीयः शब्दः एवंजातीयस्यार्थस्य वाचकः सोऽपि तथाभूतस्तथाभूतस्य वाच्य इत्याकारं वाच्यवाचकभावालम्बनं च संवेदनमिहोपादीयते इति स्वरूपप्रतिपादनम्। एवंरूपं यद्वेदनं स तर्क इति कीर्त्यते ऊह इति च संज्ञान्तरं लभते—Com. ] अनुमानं द्विप्रकारं स्वार्थं परार्थं च ( iii. 9 )। तत्र हेतुग्रहणसंबन्धस्मरणकारकं साध्यविज्ञानं स्वार्थम् ( iii. 10 )। पक्षहेतुवचनात्मकं परार्थमनुमानमुपचारात् ( iii. 23 )। [ पक्षहेतुवचनस्य च जडरूपतया मुख्यतः प्रामाण्यायोगे सति उपचारादित्युक्तम्। कारणे कार्योपचारादित्यर्थः। प्रतिपाद्यगतं हि यज्ज्ञानं तस्य कारणं पक्षादिवचनम्। कार्ये कारणोपचाराद्वा। प्रतिपादकगतं हि यत्स्वार्थानुमानं तस्य कार्यं तद्वचनमिति—Com. ] आप्तवचनादाविर्भूतमर्थसंवेदनमागमः ( iv. 1 ) उपचारादाप्तवचनं च ( iv. 2 ).

The same subject will be found in Hemacandra's Pramâṇa-mîmâṁsâ. प्रमाणं द्विधा। प्रत्यक्षं परोक्षं च (I. i. 9,10) इन्द्रियमनोनिमित्तोऽवग्रहेहावायधारणात्मा सांव्यवहारिकम् ( I. i. 21 )। अक्षार्थयोगे दर्शनानन्तरमर्थग्रहणमवग्रहः ( I. i. 27 )। अवगृहीतविशेषाकाङ्क्षणमीहा ( I. i. 28 )। ईहितविशेषनिर्णयोऽवायः (I. i. 29 )। स्मृतिहेतुर्धारणा ( I. i. 30 ).

अविशदः परोक्षम् ( प्र. मी. १-२-१ )॥ स्मृति-प्रत्यभिज्ञा-ऊहा-अनुमानागमास्तद्विधयः ( १-२-२ )॥ वासनोद्बोधहेतुका, तदित्याकारा, स्मृतिः(१-२-३)॥ दर्शनस्मरणसंभवं तदेवेदं तत्सदृशं तद्विलक्षणं तत्प्रतियोगीत्यादिसंकलनं प्रत्यभिज्ञानम् ( १-२-४ )॥ उपलम्भानुपलम्भनिमित्तं व्याप्तिज्ञानमूहः ( १-२-५ )॥ साधनात् साध्यविज्ञानमनुमानम् (१-२-७)॥ तद् द्विधा स्वार्थं परार्थं च (१-२-८)॥ स्वार्थं स्वनिश्चितसाध्यविनाभावैकलक्षणात् साधनात् साध्यज्ञानम् ( १-२-९ )॥ यथोक्तसाधनाभिधानजः [ निर्णयः ] परार्थम् ( २-१-१ )॥ वचनमुपचारात् ( २-१-२ )॥

Note 1. वासनोद्बोधहेतुका ( प्र. मी. )='संस्कारप्रबोधसंभूतं' ( Text ) The text adds अनुभूतार्थविषयम्.

2. दर्शन-स्मरणसंभवं ( प्र. मी. ) अनुभव-स्मृतिहेतुकं ( Text ). The text omits the details तदेवेदं to तत्प्रतियोगि and inserts तिर्यगूर्ध्वतादिसामान्यगोचरम्.

3. उपलम्भानुपलम्भनिमित्तं ( प्र. मी. )=उप ( 'पा' in the text is a misprint )-लम्भानुपलम्भसंभवं ( Text ). The text substitutes for

व्याप्तिज्ञान of (प्र. मी.) "त्रिकालीकलितसाध्यसाधनसंबन्धाद्यालम्बनमिदमस्मिन् सत्येव भवतीत्याद्याकारं संवेदनं" which is only an explanation of the nature of व्याप्तिज्ञान of प्र. मी. It adds that 'तर्क' is another word for 'ऊह'.

4. साधनात् साध्यविज्ञानम्—the definition of अनुमान given in प्र. मी. where अनुमान is characetrised as "अन्यथानुपपत्त्येकलक्षण" *i. e.* the conclusion or hypothesis without which the position becomes absurd.

वचनमुपचारात् (प्र. मी. २-१-२). If is thus explained by Hemacandra himself in his स्वोपज्ञवृत्तिः—"अचेतनं हि वचनं न साक्षात् प्रमितिफलहेतुरिति न निरुपचरितप्रमाणभावभाजनं मुख्यानुमानहेतुत्वेन तूपचरितानुमानाभिधानपात्रतां प्रतिपद्यते। उपचारश्च कारणे कार्यस्य यथोक्तसाधनाभिधानात् तद्विषया स्मृतिरुत्पद्यते स्मृतेश्चानुमानं तस्मादनुमानस्य परंपरया यथोक्तसाधनाभिधानं कारणं तस्मिन् कारणे वचने कार्यस्यानुमानस्योपचारः समारोपः क्रियते। ततः समारोपात् कारणं वचनमनुमानशब्देनोच्यते। कार्ये वा प्रतिपादकानुमानजन्ये वचने कारणस्यानुमानस्योपचारः वचनमौपचारिकमनुमानं न मुख्यमित्यर्थः॥ *i. e.* Two ways of understanding उपचार in the present case: (1) कार्य (अनुमान) used for the कारण (वचन) and (2) कारण (अनुमान=प्रतिपादक अनुमान) used for the कार्य (वचने).

अवग्रहेहा०—See Tv. Sûtra I.15. Bhâṣya, Rāj. Vārt. and Com.
क्षायोपशमिक— „ II. 5.

तिर्यगूर्ध्वतादि—See "एककाले नानाव्यक्तिगतोऽन्वयस्तिर्यक्सामान्यं भण्यते। तत्र दृष्टान्तो यथा—नानासिद्धजीवेषु सिद्धोऽयं सिद्धोऽयमित्यनुगताकारः सिद्धजातिप्रत्ययः। नानाकालेष्वेकव्यक्तिगतोऽन्वय ऊर्ध्वतासामान्यं भण्यते। तत्र दृष्टान्तो यथा—य एव केवलज्ञानोत्पत्तिलक्षणे मुक्तात्मा द्वितीयादिलक्षणेष्वपि स एवेति प्रतीतिः॥ अथवा नानागोशरीरेषु गौरयं गौरयमिति गोजातिप्रतीतिस्तिर्यक्सामान्यम्। यथैव चैकस्मिन् पुरुषे बालकुमाराद्यवस्थासु स एवायं देवदत्त इति प्रत्यय ऊर्ध्वतासामान्यम्—Com. on Pravacanasâra. सामान्य is of two kinds which are graphically described as *horizontal* (तिर्यक्सामान्य) and *vertical* (ऊर्ध्वतासामान्य); the former represents unity in the plurality of different individuals of the same class, the latter represents unity in the plurality of different conditions of the same individual. Cf. also तिर्यक्सामान्यं

च गवादिषु गोत्वादिस्वरूप सदृशपरिणामात्मकम्। ऊर्ध्वतासामान्यं च परापरविवर्तव्यापि मृत्स्नानादिद्रव्यम्। (Ratnâkarâvatârikâ on P.N.T. iii. 5).

उपलम्भानुपलम्भ०—Arising from the presence and absence.

त्रिकालीकलिता०—resting upon the eternal relation of concomitance between साध्य and साधन. Pr. N. T. III. 7.

ऊह:—Otherwise called तर्क, *e. g.* whatever धूम there is is only when there is वह्नि; it is not when वह्नि is not. See Pr. N. T. with Ratna. III. 7.

अनुमानं द्विधा etc.—See Pr. N. T. with Ratn. III. 9.

आप्तवचनात्०—The primary sense of आगम is the knowledge of things which springs from the words of a reliable person (आप्त); its secondary sense is the word itself. Pr. N. T. with Ratn. IV. 1,2.

प्रमाणान्तराणां-Cf.Tarka books, Muktâvalî and Nîlakaṇṭhî etc.

---

**Reference Books.**


1. Tv. Sû. Bhâṣya. Sarvârtha-Siddhi.
2. ,, Râjavârtika.
3. Pramâṇa-Mîmaṁsâ.
4. Pr. N. Tattv. with Ratnâkarâvatârikâ.
5. ,, Syâdvâda-Ratnâkara.
6. Saptabhaṅgî T.
7. Sammatitarka with Commentary.
8. Nyâyâvatâra with Commentary.
9. Viśeṣâvas'yaka.
10. "A History of Indian Philosophy"—by S. N. Das-gupta Vol. I pp. 176–179.
11. "Indian Philosophy"—by Radhakrishnan Vol. I pp. 299–302.
12. "A History of Indian Logic"—by S. C. Vidyâbhûṣaṇa pp. 170–171.
13. "An Epitome of Jainism"—by Nahar and Ghosh Ch. VII pp. 78–102.

## Stanza XXIX.

इदानीं सप्तद्वीप etc.—Refer also to the Brahmanical geography of seven islands and seven oceans. As against it, the Jaina holds that the oceans and the islands are infinite in number. For Brahmanical and Jaina cosmographies see Barnett's "Antiquities of India" pp. 196–99.

**The Stanza**: According to Jainas, souls are infinite in number. The stanza contains a criticism of the contrary doctrine.

इदमत्राकूतम् etc.—If there be only a finite number of souls, a time is conceivable when all the souls shall have achieved मुक्ति, leaving the world empty; or the once emancipated soul should return to the world to keep it ever populated! The second alternative is absurd, for all thinkers are agreed that emancipation once accomplished is accomplished for ever; in fact, it would be contrary to the notion of emancipation to suppose that emancipated souls are born again in the world and subjected to the round of births and deaths. For, is not emancipation an end of *all karmans*? And if *all karmans* have once ended, how can there be a return to bondage? Is not bondage a necessary result of karmans only? The first alternative is also impossible. For, it would be contrary to the very nature of the world (संसार) to be emptied of all souls.

दग्धे बीजे etc.—Quoted also in the Râj. Vārt. p. 361, which the editor traces to तत्त्वार्थसार.

आह च पतञ्जलिः—Vide Yogasûtras. II, 13.

एतट्टीका—The com. by Vyâsa on the same. 'वात्स्यायनभाष्य' in the AMP edition of the Syâdvâdamañjarî is a mistake for व्यासभाष्य.

सत्सु क्लेशेषु—While the root, viz. the passions, lasts, the abode of कर्म produces their fruition; but not when the root is eradicated. For example, paddy which is rice with their encasing husk will become the seed of the next paddy crop, but

the paddy from which husk has been removed or which is scorched by fire will never do so.

तथा क्लेशावनद्ध etc.—In the same way the abode of karmans, while it is wrapped in passions, has the power to germinate into Saṁsāra, but when it is stripped of them, or the root is scorched, it is no longer capable of doing so. प्रसंख्यानदग्ध–burnt deliberately.

विपाकस्त्रिविधः etc.—The three varieties of the fruition of karman are: ( 1 ) जातिः ( quality of birth ) (2) आयुः ( duration life ) and ( 3 ) भोग ( joy or suffering ).

अक्षपादोऽप्याह—Vide Nyâyasûtras IV, i, 64. When the passions have been destroyed no action ( कर्म ) makes for fruition.

विभङ्गज्ञानिशिवराजर्षि—One whose wisdom was mutilated or incomplete, having been hindered by jñânâvaraṇîya karma.

भगवदुपज्ञम्—Discovered and taught by the master.

षड्जीवकायम् पृथिव्यब्वनस्पतयः स्थावराः; तेजोवायू द्वीन्द्रियादयश्च त्रसाः—Tv. Sûtra: II, 13–14. Souls of Earth, Water, and the Vegetable Kingdom are immobile; and those of Light, Air and those possessed of two or more senses are mobile.

अजीवन् etc.—Those that have lived, are living or will live, *i. e.* जीव connotes potential as well as actual life.

इन्द्रियादि—इन्द्रियs are called 'द्रव्यप्राणs', and ज्ञान etc. 'भाव-प्राणs'. By 'प्राण' we here understand not vital airs but vital energies manifested either on the physical or the mental plane. The former are called 'द्रव्यप्राणs', and the latter 'भावप्राणs'. The point of calling both of them 'प्राण' is to emphasise that one set of activities is as much a part of life as the other. That the प्राणs at first meant not the vital airs but all organs of vital activity may be seen in the सप्तप्राणसंवाद of the Upaniṣads. And this fact throws a new and interesting light on the meaning of 'प्राणायाम' as a spiritual exercise. It will not then mean a control of the vital airs of exhalation and inhalation, but a

control of the very physical basis of life. The Jaina extends the meaning still further.

संघेनूर्ध्वे ( Hema V, iii, 80 )—काय=समूह; from the root चि.

पृथिव्यादि षण्णां etc.—' षड्जीवकायम् ' a compound dissolved in two ways: (1) षण्णां जीवकायानां समाहारः षड्जीवकायम्; (2) षण्णां जीवानां कायः...तम्।

The six kinds of संसारि जीवs are those of ( 1 ) Earth, ( 2 ) Water, ( 3 ) Fire, ( 4 ) Air, ( 5 ) Vegetable Kingdom and ( 6 ) Animal Kingdom, called respectively: (1) पृथ्वीकाय, (2) अप्काय, ( 3 ) तेजःकाय, ( 4 ) वायुकाय, ( 5 ) वनस्पतिकाय, and ( 6 ) त्रसकाय. See Âcârânga Sûtra 1. Adh. 2; Tattvârtha II, 13-14.

पृथिव्यादीनां पुनर्जीवत्वं etc.—अत्र च पृथिव्येव, कायो येषामिति विग्रहः Sîl. com. on Âcâr. Sû. I. ii. 79, 84, 85, and Sîl. com. pp.30-31.

Mrs. Sinclair Stevenson asks us to note and rightly: " The Jaina believes that water itself ( not as is so often supposed, the animalculæ living in it ) is inhabited by Ekendriya Jîva called Apkâya ekendriya. See " Heart of Jainism " p. 98.

भगवन्मते हि etc.—The six classes of Jîvas may be arranged thus in the ascending order of their numbers:

त्रस-, तेजः-, पृथिवी-, अप्-, वायु-, and वनस्पति-कायिकs.

The तेजःकायिकs are infinitely more numerous than the त्रसकायिकs; similarly still more numerous are पृथिवीकायिकाः; still more numerous are अप्कायिकाः; still more are वायुकायिकाः infinitey multiplied in number are वनस्पतिकायिकs and so on.

ते च व्यावहारिकाः etc.—The वनस्पतिकायिकs are व्यावहारिक and अव्यावहारिक.

गोला etc.—Quoted partly in S'îl. com. Âcârânga. ( p. 59 ). See Bhagavatî, X, XI.

अनाद्यनन्तेऽपि काले etc.—Even if we were to put together all the Jîvas who have attained निर्वाण ( मोक्ष ), who are now attaining it, and who will attain it hereafter, still their number falls infinitely short of the number of निगोदs. Hence the

world will never get emptied of souls, and the Saṁsâra will never end. As many fresh souls are supplied from the reservoir of निगोदs as pass out into मुक्ति.

अभिप्रेतं चैतद्—Certain Brahmanical Schools share this doctrine.

Mrs. Sinclair learns from a S'v. Sâdhu that *nigoda* is a kind of hell in which are thrown evil Jîvas who have committed specially heinous sins like murder, and who have no hope of ever coming out. See her "Heart of Jainism" p. 272.

Evidently this statement that they have "no hope of ever coming out" does not agree with the statement in the text. See also Herbert Warren, p. 45.

गोलाय असंखिज्जा etc. = गोलाश्च असंख्येया असंख्यनिगोदो गोलको भणितः। एकैकस्मिन् निगोदे अनन्तजीवा ज्ञातव्याः। सिध्यन्ति यावन्तः खलु इह संव्यवहारजीवराशेः। आयान्ति अनादिवनस्पतिराशेस्तावन्तस्तस्मिन् ॥

There are innumerable spheres ( गोलs ) in the Universe and in each sphere there are innumerable reservoirs ( निगोदs ) of jîvas; and in each such, again, there are innumerable lives or souls ( जीवs ). From this infinite reservoir or rather from the particular part which lies immediately below animal life, that is, the vegetable kingdom ( वनस्पतिराशि ), there emerge souls to make up the deficiency caused by the emancipation of the souls that achieve मोक्ष from time to time.

"The storehouse of unevolved *Jîvas* is the region called *nigoda* where an infinite number of them exist from all eternity. The *nigoda* is the portion of the universe situated below the hells. Here evolution is almost at a stand-still and is proceeding so slowly as to be almost imperceptible. From this condition *jîvas* are constantly passing into the higher states of evolution."—Champat Rai Jain's "Key of Knowledge" p. 715.

अत्र च पृथिव्येव कायो येषामिति विग्रहः।........

कथं पुनरिदमवगन्तव्यं सन्ति पृथिवीकायिका इति । उच्यते—तदधिष्ठितशरीरोपलब्धेः । अधिष्ठातरि प्रतीतिर्गवाश्वादाविव इति । न हि उपयोगादीनि लक्षणानि पृथिवीकायेषु व्यक्तानि समुपलक्ष्यन्ते । सत्यमेतद् । अव्यक्तानि तु विद्यन्ते । यथा कस्यचित् पुंसः हृत्पूरकव्यतिमिश्रमदिरातिपानपित्तोदयाकुलीकृतान्तःकरणविशेषस्याव्यक्ता चेतना न चैतावता तस्याश्चिद्रूपता एवमत्राप्यव्यक्तचेतनासंभवोऽभ्युपगन्तव्यः । ननु चात्रोच्छ्वासादिकमव्यक्तचेतनालिङ्गमस्ति न चेह तथाविधं किंचिच्चेतनालिङ्गमस्ति । नैतदेवम्—इहापि समानजातीयलतोद्भेदादिकमर्शोमांसाङ्कुरवच्चेतनाचिह्नमस्त्येव । अव्यक्तचेतनानां हि संभावितैकचेतनालिङ्गानां वनस्पतीनामिव चेतनाऽभ्युपगन्तव्येति । वनस्पतेश्च चैतन्यं विशिष्टर्तुपुष्पफलप्रदत्वेन स्पष्टं साधयिष्यते च । ततोऽव्यक्तोपयोगादिलक्षणसद्भावात् सचित्ता पृथिवीति स्थितम् ।

S'îl. Com. on Acârânga I. ii. 84.

सचेतना आपः क्वचित् खातभूमिस्वाभाविकसंभवत्वात् । दर्दुरवत् । अथवा सचेतना अन्तरिक्षोद्भवा आपः स्वाभाविकव्योमसंभूतसंपातित्वात् । मत्स्यवत् ।

सचेतनं तेजो यथायोग्याहारोपादानेन वृद्धिविशेषतद्विकारवत्त्वात् पुरुषवत् । एवमादिलक्षणेनाग्नेया जीवा निश्चेया इति ।

चेतनावान् वायुः अपरप्रेरिततिर्यगनियमितगतिमत्त्वात् । गवाश्वादिवत् ।
For त्रस see Sîlāṅkâ's Com. on Âcârâṅga I. vi. 50, and Sarvârthasiddhi on Tattvârtha II. 14. "त्रसत्वं च द्विविधं क्रियातो लब्धितश्च । तत्र क्रिया कर्म चलनं देशान्तरप्राप्तिः । अतः क्रियां प्राप्य तेजोवाय्वोस्त्रसत्वम् । लब्धिस्तु त्रसनामककर्मोदयो यस्माद्द्वीन्द्रियादीनां क्रिया च देशान्तराप्राप्तिलक्षणेति । लब्ध्या पृथिव्यप्तेजोवायुवनस्पतयः सर्वे स्थावरनामकर्मोदयात् स्थावरा एव । सास्नाविषाणादिसंघाता हि छेद्यभेद्योत्क्षेप्यभोग्याघ्रेयरसनीयस्पृश्यद्रव्यत्वे सति जीवशरीरतया प्रसिद्धाः । पृथिव्यादीनां च छेद्यत्वादि दृष्टमपह्नोतुं न शक्यते जीवशरीरत्वेन निरूपितत्वात् । पाणिपादसंघातानामिव पृथिव्यादीनामपि कदाचिच्चैतन्यं न चात्यन्तमचित्ततेति कदाचित् किंचिदचेतनमपि शस्त्रोपहतत्वात् पाण्यादिवदेवेति ।"

—Sarvârtha-Siddhi II. 13.

A similar doctrine of sentiency of matter held by a certain school of Vedântins on the basis of an Upaniṣad text is noticed by S'aṁkara in his Com. on Br. Sûtra II. i. 4.

———

**Stanza XXX.**

प्रकर्षेण etc.—प्रवादाः The blatant heresies.

अतिशायिने etc.—Hem.

मत्सरिणः Full of jealousies or angry passions. The poss. term. applied in the sense of excessiveness. Quoted in S. K. on Pâṇ. V. ii. 94.

अन्योन्यपक्ष etc.—पक्षः=पच्यते etc.—पक्ष is so called because it is put forth ( पच्यते व्यक्तीक्रियते ) as possessed of the साध्य by means of the हेतु. It is thus the presentation of the साधन ( हेतु ) in order to prove the साध्य ( धर्म ).

य एव मीमांसकानां etc.—The Mim. hold that शब्द is नित्य; the Buddhists on the other hand hold that शब्द is अनित्य. Here is an example of two schools diametrically opposed to each other.

सम्यगेति etc.—समय explained in different ways: "(1) सम्यगेति शब्दोऽनेनेति: संकेतः that by which the word goes well to the Reality; the teaching in whih the word harmonizes with truth. प्रज्ञाभिधे—Hem.

( 2 ) यद्वा सम्यगवैपरीत्येनेयन्ते ज्ञायन्ते जीवाजीवादयोर्था अनेनेति समयः=सिद्धान्तः. The doctrine which gives correct knowledge of the nine categories viz. जीव, अजीव etc.

( 3 ) अथवा सम्यगयन्ते......समयः आगमः The teaching of the Master in which the above-mentioned categories come to their own, that is to say, appear in their true nature.

( 4 ) अथवा...समयः—The doctrine of उत्पाद, व्यय and ध्रौव्य. (See supra Notes on St. V. pp.31–32) which has been declared by the Master as "the Mother" ( cf. 'अष्टप्रवचनमाता' ) that is to say, good and kind like a mother.

न पक्षपाती:—Not leaning exclusively towards either side. When there are no passions such as jealousy and hatred, there is no partisanship.

तव समय इति etc.—'Yours' *i. e.* proclaimed by you. Has Mahâvîra proclaimed the Jaina Âgama? Yes, in a way. For,

although the Gaṇadharas have presented it in the form of the Sûtras, it is Mahâvîra who has been the real author of the teaching.

नयानशेषान् etc.—Welcoming all the नयs without distinction. His teaching is like a necklace of pearls, wherein every system has its proper place like a pearl. This synthetic teaching is the Syâdvâda. A similar claim can be made by the Vedântin of the Sâṅkara school who holds the doctrine of अनिर्वचनीयता.

ननु प्रत्येकं नयानां etc.—In the Syâdvâda, discordant notes are blended so as to make a perfect harmony. In it all the 'little systems' find their great conciliator or peacemaker. As rivers mingle in the ocean, so do all systems mingle in the Syâdvâda.

न त्ववाच्यं तर्हि etc.—How is it that we do not see the Syâdvâda in the 'little systems'? The question has been answered by Siddhasena Divâkara who, identifying Mahâvîra with his great teaching, says: "Oh Lord! all views find their place in you like rivers in the ocean; you do not appear in them just as an ocean does not appear in the rivers."

अन्ये etc.—Another way of construing the passage is to take पक्षपाती as an enlargement of the subject समयः, and make मत्सरी ( corresponding to मत्सरिणः in the correlative passage ) the predicate.

अत्र च क्लिष्टाक्लिष्ट०—The author seems a bit too anxious to avoid मत्सर and पक्षपात. So he would not say that the second explanation is क्लिष्ट.

---

## Appendices.

(१) एते हि बौद्धादयः स्वयं स्याद्वादवादं युक्त्याभ्युपगच्छन्तोऽपि तं वचनैरेव निराकुर्वन्तो नूनं कुलीनताभिमानिनो मानवस्य स्वजननीभाजन्मतोऽप्यसतीमाचक्षाणस्य वृत्तमनुकुर्वन्ति। तथाहि—प्रथमतः सौगताभ्युपगतोऽनेकान्तः प्रकाश्यते। दर्शनेन क्षणिकाक्षणिकत्वसाधारणस्यार्थस्य विषयीकरणात् कुतश्चिद्भ्रमनिमित्तादक्षणिकत्वारोपेऽपि न दर्शनमक्षणिकत्वे प्रमाणं किंतु प्रत्युताप्रमाणम्। विपरीता-

ध्यवसायाक्रान्तत्वात् । क्षणिकत्वेऽपि न तत्प्रमाणम् । अनुरूपाध्यवसायाजननात् । नीलरूपे तु तथाविधनिश्चयकरणात् प्रमाणमित्येवंवादिनां बौद्धानामेकस्यैव दर्शनस्य क्षणिकाक्षणिकत्वयोरप्रामाण्यं नीलादौ तु प्रामाण्यं प्रसक्तमित्यनेकान्तवादाभ्युपगमो बलादापतति ॥ १ ॥ तथा दर्शनोत्तरकालभाविनः स्वाकाराध्यवसायिन एकस्यैव विकल्पस्य बाह्येऽर्थे सविकल्पकत्वमात्मस्वरूपे तु सर्वचित्तचैत्तानामात्मसंवेदनं प्रत्यक्षमिति वचनान्निर्विकल्पकत्वं च रूपद्वयमभ्युपगतवतां तेषां कथं नानैकान्तवादापत्तिः ॥ २ ॥ तथा हिंसाविरतिदानादि चित्तं यदेव स्वसंवेदनगतेषु सत्त्वबोधरूपत्वसुखादिषु प्रमाणं तदेव क्षणक्षयित्वस्वर्गप्रापणशक्तियुक्तत्वादिष्व-प्रमाणमित्यनेकान्त एव ॥ ३ ॥ तथा यद्वस्तु नीलचतुरस्रोर्ध्वतादिरूपतया प्रमेयं तदेव मध्यभागक्षणविवर्तादिनाप्रमेयमिति कथं नानेकान्तः ॥ ४ ॥ तथा सविकल्पकं स्वप्नादिदर्शनं वा यद्बहिरर्थापेक्षया भ्रान्तं ज्ञानं तदेव स्वस्वरूपापेक्षयाऽभ्रान्तमिति बौद्धाः प्रतिपन्नाः ॥५॥ तथा यन्निशीथिनीनाथद्वयादिकं द्वित्वेऽलीकं तदपि धवलतानियतदेशचारितादौ तेऽनलीकं प्रतिपद्यन्ते ॥ ६ ॥ कथं च भ्रान्तज्ञानं भ्रान्तिरूपतयाऽत्मानमसंविन्दत् ज्ञानरूपतया चावगच्छत् स्वात्मनि भावद्वयं विरुद्धं न साधयेत् ॥ ७ ॥ तथा पूर्वोत्तरक्षणापेक्षयैकस्यैव क्षणस्य जन्यत्वं जनकत्वं चाभ्युपागमन् ॥ ८ ॥ तथाऽर्थाकारमेव ज्ञानमर्थस्य ग्राहकं नान्यथेति मन्यमानाश्चित्रपटग्राहकं ज्ञानमेकमप्यनेकाकारं संप्रतिपन्नाः ॥ ९ ॥ तथा सुगतज्ञानं सर्वार्थविषयं सर्वार्थाकारं चित्रं कथं न भवेत् ॥ १० ॥ तथैकस्यैव हेतोः पक्षधर्मसपक्षसत्त्वाभ्यामन्वयं विपक्षेऽविद्यमानत्वाद्व्यतिरेकं चान्वयविरुद्धं ते तात्त्विकमूरीचक्रिरे ॥ ११ ॥ एवं वैभाषिकादिसौगताः स्वयं स्याद्वादं स्वीकृत्यापि तत्र विरोधमुद्भावयन्तः स्वशासनानुरागान्धकारसंभारविलुप्तविवेकदृशो विवेकिनामपकर्णनीया एव भवन्ति । किंच । सौत्रान्तिकमत एकमेव कारणमपरापरसामग्र्यन्तःपातितयानेककार्याकार्यविद्यते यथा रूपरसगन्धादिसामग्रीगतं रूपमुपादानभावेन स्वोत्तरं रूपक्षणं जनयति रसादिक्षणांश्च सहकारितया तदेव च रूपं रूपालोकमनस्कारचक्षुरादिसामग्र्यन्तरगतं सत्पुरुषस्य ज्ञानं सहकारितया जनयति । आलोकाद्युत्तरक्षणांश्च तदेवमेकं कारणमनेकानि कार्याणि युगपत्कुर्वाणं किमेकेन स्वभावेन कुर्यात् नानास्वभावैर्वा । यद्येकेन स्वभावेन तर्ह्येकस्वभावेन कृतकत्वात् कार्याणां भेदो न स्यात् । अथवा नित्योऽपि पदार्थ एकेन स्वभावेन नानाकार्याणि कुर्वाणः कस्मान्निषिध्यते । अथ नित्यस्यैकस्वभावत्वेन नानाकार्यकरणं न घटते तर्ह्यनित्यस्यैकस्वभावत्वेन नानाकार्यकरणं न घटते तर्ह्यनित्यस्यापि तेषां करणं कथमप्यस्तु निरंशैकस्वभावत्वात् । सहकारिभेदाच्चेत् कुरुते तर्हि नित्यस्यापि सहकारिभेदात्तदस्तु । अथ नानास्वभावैरनित्यः कुर्यादिति चेत् नित्यस्यापि तथा तत्करणमस्तु । अथ नित्यस्य नानास्वभावा न संभवन्ति कूटस्थनित्यस्यैकस्वभावात् । तर्ह्यनित्यस्यापि नानास्वभावा न सन्ति निरंशैकस्वभावत्वात् । तदेवं नित्यस्यानित्यस्य च समानदोषत्वान्नित्यानित्योभयात्मकमेव वस्तु मानितं वरम् । तथा चैकान्तनित्यानित्यपक्षसंभवं दोषजालं सर्वं परिहृतं भवतीति ॥ १२ ॥ ज्ञानवादिनोऽपि ताथागताः स्वार्थाकारयो-

रभिन्नमेकं संवेदनं संवेदनाच्च भिन्नौ ग्राह्यग्राहकाकारौ स्वयमनुभवन्तः कथं स्याद्वादं निरस्येयुः ॥ १ ॥ तथा संवेदनस्य ग्राह्यग्राहकाकारविकलता स्वप्नेऽपि भवद्भिर्नानुभूयते। तस्या अनुभवे वा सकलासुमतामधुनैव मुक्ततापत्तेः। तत्त्वज्ञानोत्पत्तिर्मुक्तिरिति वचनात्। अनुभूयते च संवेदनं संवेदनरूपतया कथंचित्। तत एकस्यापि संवेदनस्यानुभूतानुभूततयानेकान्तप्रतिभासो दुःशंकोऽपह्नोतुमिति ॥ २ ॥ तथा सर्वस्य ज्ञानं संविद्रूपस्वसंवेदनेन ग्राह्यग्राहकाकारशून्यतयात्मानमसंविदत् संविद्रूपतां चानुभवद्विकल्पेतरात्मकं सदेकान्तवादस्य प्रतिक्षेपकमेव भवेत् ॥ ३ ॥ तथा ग्राह्याकारस्यापि युगपदनेकार्थावभासिनश्चित्रैकरूपता प्रतिक्षिपत्येवैकान्तवादमिति ॥४॥

(२) नैयायिकैर्वैशेषिकैश्च यथा स्याद्वादोऽभ्युपजग्मे तथा प्रदर्श्यते। इन्द्रियसंनिकर्षादेर्धूमज्ञानं जायते। तस्माच्चाग्निज्ञानम्। अत्रेन्द्रियसंनिकर्षादिः प्रत्यक्षं प्रमाणं तत्फलं धूमज्ञानं धूमज्ञानं चाग्निज्ञानापेक्षयानुमानं प्रमाणम्। अग्निज्ञानं त्वनुमानफलम्। तदेवं धूमज्ञानस्य प्रत्यक्षफलतामनुमानप्रमाणतां चोभयरूपतामभ्युपगच्छन्ति। एवमन्यत्रापि ज्ञाने फलता प्रमाणता च पूर्वोत्तरापेक्षया यथार्हमवगन्तव्या ॥ १ ॥ एकमेव चित्रपटादेरवयविनो रूपं विचित्राकारमभ्युपयन्ति। न च विरोधमाचक्षते। तदुक्तं कन्दलयाम्। विरोधादेकमनेकस्वभावमयुक्तमिति चेन्न। तथा च प्रावादुकप्रवादः।

एकं चेत् तत्कथं चित्रं चित्रं चेदेकता कुतः।
एकं चैव तु चित्रं चेत्येतच्चित्रतरं मतम् ॥

इति को विरोध इत्यादि। चित्रात्मनो रूपस्य नायुक्तता। विचित्रकारणसामर्थ्यभाविनस्तस्य सर्वलोकप्रसिद्धेन प्रत्यक्षेणैवोपपादितत्वादित्यादि ॥ २ ॥ एकस्यैव धूपकटच्छुकस्यैकस्मिन् भागे शीतस्पर्शः परस्मिंश्च भाग उष्णस्पर्शः। अवयवानां भिन्नत्वेऽप्यवयविन एकत्वादेकस्यैव द्वौ विरुद्धौ तौ स्पर्शौ यतस्तेषामेवं सिद्धान्तः एकस्यैव पटादेश्चलाचलरक्तारक्तावृतानावृताद्यनेकविरुद्धधर्मोपलम्भेऽपि दुर्लभो विरोधगन्धः इति ॥ ३ ॥ नित्यस्येश्वरस्य सिसृक्षा संजिहीर्षा च रजस्तमोगुणात्मकौ स्वभावौ क्षितिजलाद्यमूर्तिता च सात्त्विकस्वभावाः परस्परं विरुद्धाः॥४॥ एकस्यामलकस्य कुवलयबिल्वाद्यपेक्षया महत्त्वमणुत्वं च विरुद्धे ॥ ५ ॥ एवमिक्षोः समिद्वंशापेक्षया ह्रस्वत्वदीर्घत्वे अपि ॥ ६ ॥ देवदत्तादेः स्वपितृसुतापेक्षया परत्वापरत्वे अपि ॥ ७ ॥ अपरं सामान्यं नाम्ना सामान्यविशेष इत्युच्यते। सामान्यविशेषश्च द्रव्यत्वगुणत्वकर्मत्वलक्षणः। द्रव्यत्वं हि नवसु द्रव्येषु वर्तमानत्वात् सामान्यं गुणकर्मभ्यो व्यावृत्तत्वाद्विशेषः। एवं गुणत्वकर्मत्वयोरपि सामान्यविशेषता विभाव्या। ततश्च सामान्यं च तद्विशेषश्चेति सामान्यविशेषः। तस्यैकस्य सामान्यता विशेषता च विरुद्धे ॥ ८ ॥ एकस्यैव हेतोः पञ्च रूपाणि संप्रतिपद्यते ॥ ९ ॥ एकस्यैव पृथिवीपरमाणोः सत्तायोगात् सत्त्वं द्रव्यत्वयोगाद्द्रव्यत्वं पृथिवीत्वयोगात् पृथिवीत्वं परमाणुत्वयोगात् परमाणुत्वम् अन्त्याद्विशेषात् परमाणुभ्यो भिन्नत्वं

चेच्छतां परमाणोस्तस्य सामान्यविशेषात्मकता बलादापतति, सत्त्वादीनां परमाणुतो भिन्नतायां तस्यासत्त्वाद्द्रव्यत्वात्पार्थिवीत्वाद्यापत्तेः ॥ १० ॥ एवं देवदत्तात्मनः सत्त्वं द्रव्यत्वमात्मत्वयोगादात्मत्वमन्त्याद्विशेषाद्यज्ञदत्ताद्यात्मभ्यो भिन्नतां चेच्छतां तस्यात्मनः सामान्यविशेषरूपतावश्यं स्यात्। एवमाकाशादिष्वपि सा भाव्या ॥ ११ ॥ योगिनां नित्ये तु तुल्याकृतिगुणक्रियेषु परमाणुषु मुक्तात्मसु च प्रत्याधारं विलक्षणोऽयमिति प्रत्ययो येभ्यो भवति तेऽन्त्या विशेषा इत्यत्र तुल्याकृतिगुणक्रियत्वं विलक्षणत्वं चोभयं प्रत्याधारमुच्यमानं स्याद्वादमेव साधयेत् ॥ १४ ॥ एवं नैयायिकवैशेषिका आत्मनानेकान्तमुररीकृत्यापि तत्प्रतिक्षेपायोद्यच्छन्तः सतां कथं नोपहास्यतां यान्ति ? । किं च । अनेकान्ताभ्युपगमे सत्येव गुणः परस्परविभक्तेष्ववयवावयव्यादिषु मिथोवर्तनचिन्तायां यद्दूषणजालमुपनिपतति तदपि परिहृतं भवति । तथाहि । अवयवानामवयविनश्च मिथोऽत्यन्तं भेदोऽभ्युपगम्यते नैयायिकादिभिर्न पुनः कथंचित्। ततः पर्यनुयोगमर्हन्ति । अवयवेष्ववयवी वर्तमानः किमेकदेशेन वर्तते किं वा सामस्त्येन। यद्येकदेशेन, तदयुक्तम्। अवयविनो निरवयवत्वाभ्युपगमात्। सावयवत्वेऽपि तेभ्योऽवयवी यद्यभिन्नः, ततोऽनेकान्तापत्तिः। एकस्य निरंशस्यानेकावयवत्वप्राप्तेः। अथ तेभ्यो भिन्नोवयवी तर्हि तेषु स कथं वर्तत इति वाच्यम्। एकदेशेन सामस्त्येन वा। एकदेशपक्षे पुनस्तदेवावर्तत इत्यनवस्था। अथ सामस्त्येन तेषु स वर्तते, तदप्यसाधीयः। प्रत्यवयवमवयविनः परिसमाप्ततयावयविबहुत्वप्रसङ्गात्। ततश्च तेभ्यो भिन्नोऽवयवी न विकल्पभाग् भवति। नन्वभेदपक्षेऽप्यवयविमात्रमवयवमात्रं वा स्यादिति चेत् न। अभेदस्याप्येकान्तेनानभ्युपगमात्। किं तर्ह्यन्योन्याविश्लिष्टस्वरूपो विवक्षया संदर्शनीयभेदोऽवयवेष्ववयव्यभ्युपगम्यते। अबाधितप्रतिभासेषु सर्वत्रावयवावयविनां मिथो भिन्नाभिन्नतया प्रतिभासनात्। अन्यथा प्रतिभासमानानामन्यथा परिकल्पने ब्रह्माद्वैतशून्यतावादादेरपि कल्पनाप्रसङ्गात्। एवं संयोगिषु संयोगः समवायिषु समवायो गुणिषु गुणो व्यक्तिषु सामान्यं चात्यन्तं भिन्नान्यभ्युपगम्यमानानि तेषु वर्तनचिन्तायां सामस्त्यैकदेशविकल्पाभ्यां दूषणीयानि। तदेवमेकान्तभेदेऽनेकदूषणोपनिपातादनेकान्ते च दूषणानुत्थानादनेकान्ताभ्युपगमान्न मोक्ष इति। अतो वरमादावेव मत्सरितां विहायानेकान्तोऽभ्युपगतः। किं भेदैकान्तकल्पनया अस्थान एवात्मना परिक्लेशितेनेति ? ॥

(३) सांख्यः सत्त्वरजस्तमोभिरन्योन्यं विरुद्धैर्गुणैर्ग्रथितं प्रधानमभिदधान एकस्याः प्रकृतेः संसारावस्थामोक्षसमययोः प्रवर्तननिवर्तनधर्मौ विरुद्धौ स्वीकुर्वाणश्च कथं स्वस्यानेकान्तमतवैमुख्यमाख्यातुमीशः स्यात् ॥ ?

मीमांसकास्तु स्वयमेव प्रकारान्तरेणैकान्तेकाद्यनेकान्तं प्रतिपद्यमानास्तत्प्रतिपत्तये सर्वथा पर्यनुयोगं नार्हन्ति। अथवा शब्दस्य तत्संबन्धस्य च नित्यत्वैकान्तं

प्रति तेऽप्येवं पर्यनुयोज्याः। त्रिकालशून्यकार्यरूपार्थविषयविज्ञानोत्पादिकानोदनेति मीमांसकाभ्युपगमः। अत्र कार्यतायास्त्रिकालशून्यत्वेऽभावप्रमाणस्य विषयता स्यात्। अर्थत्वे तु प्रत्यक्षादिविषयता भवेत्। उभयरूपतायां पुनर्नोदनाया विषयतेति ॥

—Guṇaratna's Com. on Ṣaḍdarśana Samuccaya.

——:o:——

## Stanza XXXI.

विभव एव०—वैभव = विभव-Wealth 'प्रज्ञादिभ्योण्'. Pâṇ. V.iv. 38; 'प्रज्ञादिभ्यश्च' Hem. VII. ii. 165. विभोर्भावः कर्म etc.—Or वैभव=the quality and the act of विभु *i. e.* all-comprehensiveness.

हे महनीयमुख्य etc.—The best of the adorable viz. the Pañca Parameṣṭhins to whom obeisance is offered in the famous formula " णमो अरिहंताणम् " etc.

ननु सिद्धेभ्यो etc.—Why Arhats first? Are not they lower than the Siddhas? Do not the Arhats bow to the Siddhas on entering the life of asceticism? काऊण etc.=कृत्वा नमस्कारं सिद्धेभ्योऽभिग्रहं तु सोऽग्रहीत्.

मैवं etc.—They do. But it is the teaching of the Arhats that reveals the existence of the Siddhas. अरहन्तु etc.=" अर्हदुपदेशेन सिद्धा ज्ञायन्ते तेनार्हदादिः "—विशेषावश्यकगाथा-३२१३.

लङ्घेमेत्यादि—Nidarśanālaṁkāra. अथवा लघु शोषणे etc.—लघ् लङ्घ् in the sense of 'to cross' being Âtm. pada लङ्घेम may have to be defended by the rule of elasticity of the rule as to padas (आत्मनेपदमनित्यम्); or it may be taken as a form of लघ्, लङ्घ् to dry up which M. seems to prefer.

अत्र चौद्धत्यपरिहारेण etc.—A very ingenious bit of commentary. Why is there the plural number in आशास्महे, लङ्घेम and वदेम, when the person to whom they refer is but one? Answer: It is intended to suggest that there are numberless souls

in the position of the author who venture to describe the greatness of his teaching but fail to do it justice. Thus, the plural number instead of betraying egotism places 'a banner at the top of the palace of humanity'.

एषु एकत्रिंशति—Up to this, from I to XXXI stanzas, the metre was उपजाति. That in XXXII is शिखरिणी.

---

## Stanza XXXII.

विप्रतारक—deceitful.

अव्यभिचारि—His teaching is in no point wrong, and consequently he is able to show that no other system which differs from it can claim to be altogether right ( अव्यभिचारि ).

अन्ययोग etc.—Exclusion of all the other systems from the laim of bringing salvation to mankind.

हतपरे—The wretched heretics.

मायाकाराः—Jugglers *i. e.* the deceitful teachers.

शाम्बरीयप्रयोग—Practice of the science tanght and practised by the demon शम्बर *i. e.* sorcery.

अन्धं करोति etc.—अन्ध, that which blinds + तमः darkness = अन्धतमसम्. For the affix अ applied to तमस्, see अवसमन्धेभ्यस्तमसः Pâṇ. V.iv. 79; Hem. VII.iii. 80.

यत्रान्धतमसे etc.—Twofold error of confounding तत्त्व with अतत्त्व and अतत्त्व with तत्त्व, A with not-A and not-A with A.

अनेन च विशेषणेन—Thus the Error is what is technically known in the Jaina S'âstras as मिथ्यात्व मोहनीय कर्मन्. मिथ्यात्व मोहनीय—See Tattvârtha Sûtra VIII.9. and Râj Vârt. मोहनीय कर्म is of two kinds: दर्शन° and चारित्र°. The former is of three kinds: ( 1 ) सम्यक्त्वदर्शन-मोहनीय ('which makes right faith or perception defective'), ( 2 ) मिथ्यात्वदर्शन-मोहनीय ('that which leads the soul away from right faith or perception')

and ( 3 ) सम्यक्त्वमिथ्यात्व° ( 'mixed right and wrong faith' )—Jaini's "Outlines of Jainism" p. 92. On मिथ्यात्वमोहनीय° Mrs. Sinclair Stevenson writes: "The last of the eighty-two fruits of sin ( मिथ्यात्व-मोहनीय ) is the most terrible of all, for it deprives a man of the power of believing in the truth. He is forced by it to believe in a false instead of in a true god; and in an evil guru and not in a good one; and in a false creed instead of the true faith." ( "The Heart of Jainism" —p. 139 ).

तथा च ग्रन्थान्तरे See Hem. Yogaśâstra II. 3.

अविसंवादिवचनः—Whose teaching never swerves from Truth, कष-च्छेद-ताप—the three tests of real gold. The same are explained in the Gâthâs "पाणव ........." See below.

कष—To avoid the life of sin such as Hiṁsâ, and practise Dhyâna, Adhyayana, *i. e.* meditation, study etc. Mark the homogeneity of Brâhmaṇa and Jaina religious disciplines and practices.

छेद—To see that the outward conduct is in harmony with the laws of धर्म and makes for purity.

ताप—To undergo pain and bondage connected with the life of a Jîva.

पाणवहाई आणं etc.—

"प्राणवधादीनां पापस्थानानां यस्तु प्रतिषेधः ।
ध्यानाध्ययनादीनां यश्च विधिरेष धर्मकषः ॥
बाह्यानुष्ठानेन येन न बाध्यते तन्नियमात् ।
संभवति च परिशुद्धः स पुनर्धर्मे छेद इति ॥
जीवादिभाववादो बन्धादिप्रसाधक इह तापः ।
एतैः परिशुद्धो धर्मो धर्मत्वमुपैति ॥"

—Traced to हरिभद्रसूरिकृत पञ्चवस्तुक चतुर्थद्वार by AMP.

तीर्थान्तरीयास्तु हि etc.—The teachers of the other schools of thought teach doctrines which cannot stand the test laid down above ( कष, च्छेद and ताप ), and are, therefore, not gold but

base metal. They can only sink the world in the depths of false knowledge.

त्रातः—One who has saved himself and knows how to save others ( त्रिभुवनपरित्राणप्रवीण ).

त्वयि etc.—त्वयि = त्वय्येव, न देवान्तरे.

कृतधियः = कृता...संस्कृता...बुद्धिर्येषां ते कृतधियः चिद्रूपाः पुरुषाः—Those who have 'made' their intellect; those who have cultivated and refined their mind; the wise.

कृता in कृतधियः=परिकर्मिता *i. e.* refined, cultivated, adorned, *i. e.* adorned with wisdom; कृता in कृतसपर्याः=प्रकृता; कर्तुमारब्धा ( प्रादिकं विनाप्यादिकर्मणो गम्यमानत्वात् ).

S'l. 1. येषामुज्ज्वलहेतुहेति etc.—One shining with bright weapons consisting of arguments or reason.

प्रामाणिकाध्वस्पृशाम्—Those who tread the path which is 'प्रामाणिक' or which belonged to those who are 'प्रामाणिक'. Not much difference in sense. It means—those who tread the path of reason or those who follow reason.

हेमाचार्य—Who have a powerful friend in the shape of thought arising from this Song of Praise addressed by Hemâcârya to Jina Mahâvîra.

तेषां दुर्नयदस्यु०—They are never afraid of the robbers, namely, false systems of philosophy.

आयासेन विना—They easily reach the city of जिनागम—the scriptures or teaching of Jaina.

Sl. 2. चातुर्विद्य—(1) लक्षण (Grammar), (2) आगम (Scriptures), (3) साहित्य ( Literature and Rhetoric ) and (4) तर्क ( Logic ). See Note on p. 7 and in the Supplementary Notes.

Hemācārya's works in all these branches are well known. ( See Introduction ).

Read गम्भीरार्थविलोकने and द्राघीयःसमया०.

द्राघीयःसमया०—Where many an evil has been averted by insistent regard for a long time. द्राघीयःसमय has been inter-

preted as 'महान् सिद्धान्त' ( See Hiralal Hansraj's Gujarati translation ). But I do not think द्राघीयः means 'महान्' and समय=सिद्धान्त here.

सिद्धाञ्जनम्—The miraculous application which gives a new power to the eye.

S'l. 3. अन्यान्यशास्त्रतरु...दृब्धां मया—

Let those whose hearts are pure wear this commentary on the praise of the last Tirthaṁkara ( Lord Mahâvira ) like a garland made of a few dotrines which have been gathered here and which are like tempting flowers resting on the trees of different systems of philosophy.

प्रमाणसिद्धान्त—A good expression of modesty.

उर्व्यामेव सुधाभुजां गुरुरिति—to be construed with अनुमिति in the second line. It means: the inference that he is the teacher of gods on this earth. त्रैलोक्यविस्तारिणो to be construed with प्रतिभाभरात्—from the rich imagination which extends throughout the three worlds. निर्दम्भम्—rightly, honestly, सुधेति वचनोद्गारं=वचनोद्गारं सुधेति.

संवादमेदस्विनीम्—Construe with सुधा—full of consistency or agreement with truth. The verse is a relative clause, to be construed with ते विश्ववन्द्याः of the next line.

S'l. 6. नागेन्द्रगच्छ०—Who is in the नागेन्द्रगच्छ like the Kaustubha gem on the breast of Vishnu.

नन्द्यासुः—May he ( उदयप्रभसूरि-the guru of मल्लिषेण ) rejoice

S'l. 7. मनुरविमितशाकाब्दे—*i. e.* in the S'aka year 1214. मनु=१४ ( चतुर्दश मनवः ); रवि=१२ ( द्वादश आदित्याः ).

दीपमहसि—On the day of Divâli the thirtieth day of Âśvina.

S'l. 8. साहाय्यो०—Composed and made particularly 'fragrant' by the co-operation or rather help of जिनप्रभसूरि.

S'l. 9. विश्राणे कलिनिर्जयात्—One who has been like Jina ( Lord Mahâvîra ) owing to his achieving victory over Kali.

मिषात्—This is a commentary on the Song of Praise composed by Hemācārya; but, truth to say, it is not intended to be so much a literary composition as an expression of 'bhakti' towards Hemacandra.

निर्णेतुं etc.—'I do not submit it to the judgment of scholars.'

तस्यास्तित्वम् etc.—The author is confident that there is plenty of spontaneous thought in his work.



# Supplementary Notes.

कलिकालसर्वज्ञ—A title well deserved by one who was 'probably the most learned man of his time'.

अन्ययोगव्यवच्छेदिका—The name of the text commented upon by Malliṣeṇa. If means: the work in which the claims of other (non-Jaina) systems of philosophy as expressions of Truth (*i. e.* the whole Truth) are disproved.

स्याद्वादमञ्जरी—The name of the commentary. In disproving the claims of other systems, the Jaina does not allege that they are wholly untrue, but maintains that they are broken lights of one entire Truth for which Jainism stands in its doctrine of Syâdvâda—*i. e.* the doctrine of 'May-be' or partial truths.

सारस्वतः......मन्त्रः—

श्रीरैवतावतारे च तीर्थे श्रीनेमिनामतः ।
सार्थे साधुमते तत्रावात्सीदवहितस्थितिः ॥
निशीथेऽस्याविनिद्रस्य नासाग्रन्यस्तचक्षुषः ।
आराधनात् समक्षाऽभूद् ब्राह्मी ब्रह्ममहोनिधिः ॥
वत्स स्वच्छमते यासीर्मास्य देशान्तरं भवान् ।
तुष्टा त्वद्भक्तिपुष्टयाहं सेत्स्यतीहितमत्र ते ॥
इत्युक्त्वा सा तिरोधत्त देवी वाचामधीश्वरी ।
स्तुत्या तस्या निशां नीत्वा पश्चादागादुपाश्रयम् ॥
सिद्धसारस्वतोऽक्लेशात् सोमः सीमा विपश्चिताम् ।
अभूदभूमिरुन्निद्रान्तरवैरिकृतद्रुहः ॥

—Prabhâvakacarita of Candraprabhasûri, Hema. Prabandha vv. 42-46.

उदयप्रभः—Author of धर्मशर्माभ्युदय, a महाकाव्य. See Introduction.

दुःषमार—See Hemacandra's Abhidhânacintâmaṇi I. 42.

रैवत—Girnar, made holy by its association with the name of Neminâtha, twenty-second Tirthaṃkara, said to be a contemporary and kinsman of Kṛṣṇa.

ब्राह्मी=सरस्वती. The name points to the original solidarity of Jaina and Brâhmaṇa beliefs.

सोमः=सोमचन्द्रः, the name of हेमचन्द्र before he became a 'सूरि'.

सिद्धसारस्वतः—सिद्धः सारस्वतो ( मन्त्रः ) यस्य, to be construed with अभूत्.

चातुर्विद्यनिर्माणैकब्रह्मणा—Like Brahmâ who made the four Vedas, Hemacandra made the four vidyâs viz. लक्षण, आगम, साहित्य and तर्क. In earlier Gujarat inscriptions 'चातुर्विद्य' is often used for 'the four Vedas' declared by Brahmâ.

For चातुर्विद्य—Cf. Prabāvakacarita:—

"सोमचन्द्रस्ततश्चन्द्रोज्ज्वलप्रज्ञाबलादसौ ।
तर्कलक्षणसाहित्यविद्याः पर्यच्छिनद्द्रुतम् ॥

—Hema. 37.

Cf. also श्रीसिद्धराजेन वादनिष्णाततां पृष्टाः श्रीहेमाचार्यश्चतसृषु विद्यासु परं प्रावीण्यं बिभ्राणं............कर्णावतीस्थितं श्रीदेवाचार्यं प्राहुः—Prabodhacintâmaṇi, where 'the four branches of Knowledge' are, according to Tawney, "त्रयी, the triple Veda; आन्वीक्षिकी, logic and metaphysics; दण्डनीति, the science of government; and वार्ता, practical arts." This meaning does not seem likely, in view of the consensus of explanation given by Jaina writers that the word means लक्षण ( Grammar ), आगम ( Canon ), साहित्य ( Literature including Poetics ) and तर्क ( Logic including Metaphysics. )

Bhoja, King of Mâlava, is said to have composed a set of four विद्याs which differed from the above in two. They are s'âstras of (1) शब्द, (2) अलङ्कार, (3) दैवज्ञ-( ज्योतिर्विद् or ज्यौतिष-) and तर्क.

Cf. "असौ हि मालवाधीशो विद्वच्चक्रशिरोमणिः ।
शब्दालङ्कारदैवज्ञतर्कशास्त्राणि निर्ममे ॥"

Prabhâvaka-Hema. 76.

For the meaning of 'लक्षण' cf. ibid:—

संक्षिप्तश्च प्रवृत्तोऽयं समयेऽस्मिन् कलापकः ।
लक्षणं तत्र निष्पत्तिः शब्दानां नास्ति तादृशी ॥

42

पाणिनेर्लक्षणं वेदस्याङ्गमित्यत्र च द्विजाः।
अवलेपादसूयन्ति कोर्थऽस्तैरुन्मनायितैः॥

— ,, 82-83.

श्रीहेमसूरयोऽप्यत्रालोक्य व्याकरणव्रजम्।
शास्त्रं चक्रुर्नवं श्रीमत् सिद्धहेमाख्यमद्भुतम्॥
मौलिं लक्षणशास्त्रेषु विश्वविद्वद्भिरादृतम्॥

— ,, 96-98.

For the origin of the use of the word 'लक्षण' in this sense, Cf. कथं पुनरिदं भगवतः पाणिनेराचार्यस्य लक्षणं प्रवृत्तम्?—Vyâkaraṇa Mahâbhâṣya, Introduction. The reason for the word लक्षण as applied to Grammar will be found in the following passage which precedes it: "अथैतस्मिन्शब्दोपदेशे सति किं शब्दानां प्रतिपत्तौ प्रतिपदपाठः कर्तव्यः?।.........। कथं तर्हीमे शब्दाः प्रतिपत्तव्याः? किंचित्सामान्यविशेषवल्लक्षणं प्रवर्त्यम्।—M. Bhâṣya *i. e.* Grammar lays down general rules, and does not deal with each individual word in the language. Cf. also" तस्मात् स्वतन्त्रमेवेदं विद्यास्थानमर्थनिर्वचनम् व्याकरणं तु लक्षणप्रधानमिति विशेषः—Durga's Com. on Yâska's Nirukta, where लक्षण=forms in accordance with different senses.

अभयदानाभिधानजीवातु°—Vide "प्रभोरादेशाच्चाज्ञाकारिष्वष्टादशदेशेषु चतुर्दशवत्सरप्रमितां सर्वभूतेषु मारिं निवारितवान्"—Prabandhacintâmaṇi, Kumârapâla Prabandha; also, "श्रीकुमारपालदेवे तु द्वासप्तति सामन्ताः स्वाज्ञां ग्राहिताः। अष्टादशदेशेष्वमारिपटहो दापितः। चतुर्दशदेशेषु मैत्रीबलेनार्थबलेन च जीवरक्षा कारिता"—Kumārapāla Prabandha of Jinamaṇḍana gaṇi.

विज्ञान—See Hemacandra's Abhidhānacintāmaṇi II. 224:—
"पण्डा तत्त्वानुगा मोक्षे ज्ञानं, विज्ञानमन्यतः।
शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा॥"

अष्टादशदोषसंक्षय—Cf. अन्तराया दानलाभवीर्यभोगोपभोगगाः। हासो रत्यरती भीतिर्जुगुप्सा शोक एव च॥ कामो मिथ्यात्वमज्ञानं निद्रा चाविरतिस्तथा। रागो द्वेषश्च नो दोषास्तेषामष्टादशाप्यमी॥—Abhidhāna I. 72-73.

अपायापगम—Destruction of अन्तरायकर्म, one of the *Karmans*, the eighth on the list, which impedes ज्ञान.

महाप्रातिहार्यसपर्या—This consists of the following: "कंकिल्लि कुसुमवुट्ठि देवज्झुणि चामरा सणाइं च। भावलय भेरि छत्तं जयन्ति जिण पाडि-

हेराई ॥" ( Pravacana Sâroddhâra XXXIX, 440. ) *i. e.* अशोकवृक्ष, कुसुमवृष्टि, दिव्यध्वनि, चामरऽ, आसनऽ, भावलय ( प्रभामण्डल ) भेरी and छत्र.

Cf. " अशोकवृक्षः सुरपुष्पवृष्टिर्दिव्यो ध्वनिश्चामरमासनं च। भामण्डलं दुन्दुभिरातपत्रं सत्प्रातिहार्याणि जिनेश्वराणाम् "—Quoted in नन्दिसूत्र हारिभद्रीयवृत्ति. The whole section on जिनस्तुति, in Haribhadra's Com. on Nandisûtra, will be found interesting in this connection.

जे एजं जाणई etc.—Âcârâṅga I. iii. 1-4. Sûtra 122.

आत्ममात्रतारक etc.—Who brings about his own salvation only. अन्तकृत्—Who puts an end to his karmans. केवली is ' अतीतानागतसूक्ष्मव्यवहितपदार्थवेदी ' and is described as ' द्रव्यभावमुण्डनप्रधानस्तथाविधबाह्यातिशयशून्यः । ', that is, leading a life of asceticism, with the outward symbol and the inner mentality of the shaven-headed. मुण्डकेवली is thus described: "संविग्नौ भवनिर्वेदादात्मनिःसरणं तु यः। आत्मार्थं संप्रवृत्तोऽसौ सदा स्यान्मुण्डकेवली ॥" —Intense as is the asceticism of the मुण्डकेवलिन्, he still aims at *his own* salvation, and not of the world of living beings, as does the Tîrthâṁkara. Compare the distinction between अर्हत् and बोधिसत् or बुद्ध in Buddhism.

चतुस्त्रिंशदतिशयाः—Thirty-four excellences; 4 सहोत्थाः ( सहजन्मानः ) congenital, 11 कर्मघातजाः *i. e.* accruing from the destruction of karmans, and 19 दैव्याः ( देवकृताः ) made by gods. For further details see the footnote on p. 22 of Ârhata-Mata-Prabhâkara edition of प्रमाणमीमांसा.

निशीथचूर्णौ etc.—In the Niśîthacûrṇi, 17th Uddeśa,

गुणस्थान—*i. e.* ' Stages in the evolution of the soul ' (Jaini). These are thus enumerated in Gommaṭasâra Jîvakâṇḍa, verses 9-10:—मिच्छो सासणमिस्सो अविरदसम्मो य देसविरदो य। विरदापमत्त इदरो अपुव्व अणियट्ट सुहमो य ॥ उपसंतखीणमोहो सजोगकेवलिजिणो अजोगी य। चउदस जीव समासा कमेण सिद्धा च णादव्वा ॥—*i. e.* There are fourteen stages of the soul ( गुणस्थानऽ ): (1) False belief ( मिच्छो or मिच्छे=मिथ्यात्व ). (2) Backsliding ( सासण=सासादन or सास्वादन ); (3) Mixed right and wrong belief ( मिस्सो=मिश्र ); (4) Right faith, not acted on, that is, lacking in विरति or abstention ( अविरदसम्मो अविरतसम्यक्त ); (5) Beginning of right conduct (देसविरदो=देशविरतः

*i. e.* partial renunciation). (6) Slight negligence as to right conduct ( विरदापमत्त=प्रमत्त-विरत *i. e.* विरत and yet प्रमत्त occasionally ), (7) Right conduct free from all negligence ( इदरो= इतरः the other *i. e.* right conduct without negligence अप्रमत्त° ) (8) Initiation to the higher life ( अपुव्व=अपूर्वकरण *i. e.* unprecedented or unique ); (9) Incessant pursuit of the higher life (अणियट्ट अणिवृत्तिकरण); (10) Condition almost devoid of desires ( सुहमो=सूक्ष्मसंपराय ); (11) Condition entirely devoid of desires (उवसंत=उपशान्ति). *i.e.* (12) Infatuationlessness (खीणमोहो=क्षीणमोहः); (13) Omniscience in the embodied condition ( सजोग केवलि=सयोग केवलिन् ); and lastly, (14) Omniscience ( अजोगी=अयोगकेवलिन् ). When this perfection is reached the soul is called Siddha or Perfect. ( See Jaini's "Outlines of Jainism" pp. 105–106, and for a fuller account, Mrs. Sinclair Stevenson's "Heart of Jainism" pp. 185 to 192, section on "the fourteen steps to Liberation from Karma" ).

श्रुतकेवल्यादिषु—Kevalins who were versed in all the parts of the Jaina Canon. These are six and they are enumerated in the Abhidhânacintâmaṇî Ch. I, 33–34—अथ प्रभवः प्रभुः । शय्यंभवो यशोभद्रः संभूतविजयस्ततः । भद्रबाहुः स्थूलभद्रः श्रुतकेवलिनो हि षट् ॥

श्रीवर्धमानाभिधमात्मरूपम् etc.—The whole stanza in the अयोगव्यवच्छेदद्वात्रिंशिका runs as follows:—"अगम्यमध्यात्मविदामवाच्यं वचस्विनामक्षवतां परोक्षम् । श्रीवर्धमानाभिधमात्मरूपमहं स्तुतेर्गोचरमानयामि ॥"

For वर्धमान and the age in which he lived cf. "भगवान् ऋषभस्वामी सुषमदुष्षमारकपर्यन्ते समुदपादि, एकोननवतिपक्षेषु शेषेषु सिद्धिमगमत् । वर्धमानस्वामी तु भगवान् दुष्षमसुषमारकपर्यन्तेषु एकोननवतिपक्षेषु शेषेषु मुक्तिसौधमध्यमाध्यास्त ।.........। उत्सर्पिण्यामपि च प्रथमतीर्थकरो दुष्षमसुषमायामेकोननवतिपक्षेषु व्यतिक्रान्तेषु जायते, यतो भगवद्वर्धमानस्वामिसिद्धिगगनस्य भविष्यन्महापद्मतीर्थकरोत्पादस्य चान्तरं चतुरशीतिवर्षसहस्राणि सप्तवर्षाणि पञ्च मासाः पठ्यन्ते ।......। तत उत्सर्पिण्यामपि प्रथमतीर्थकरो यथोक्तकालमान एव जायते। तथा उत्सर्पिण्यां चतुर्विंशतितमः तीर्थकरः सुषमदुष्षमायामेकोननवतिपक्षेषु व्यतिक्रान्तेषु जन्मासादयति । एकोननवतिपक्षाधिकचतुरशीतिपूर्वलक्षातिक्रमे च सिध्यति। तत उत्सर्पिण्यामवसर्पिण्यां वा दुष्षमसुषममासुषमदुषमयोरेव तीर्थकृतां जन्मनिर्वाणं च ॥"—Malayagiri's Com. on Nandî-sûtra.

### St. III.

रूसउ वा परो वा etc.—Cf. "परो रुष्यतु वा मा वा विषवत् प्रतिभातु वा। भाषितव्या हिता भाषा स्वपक्षगुणकारिणी"—quoted in the footnote in A.M.P. edition of Syadvâdamañjarî p. 12 from Hemacandra's S'reṇikacaritra II 32.

न भवति धर्मः etc.—Tattvârtha-Sûtra-Sambandha-Kârika 29, attributed to Umâsvâti by Malliṣeṇa ( For the quotation and the authorship of the work see Introduction p. 4 of AMP. editon of तत्त्वार्थ° ).

---

### St. VI.

In Notes p. 68 on Page 28 ll. 175–178 of the text read: "The passage that follows is reproduced verbatim in Guṇaratna's T. R. D. pp. 261–62". for "………is taken verbatim from……" शिपिविष्ट—S'iva. See "स्याद्व्योमकेशः शिपिविष्टभैरवौ"—Abhidhânacintâmaṇi II. 112.

शम्भोरष्टगुणाधिकरणत्वे etc.—बुद्धि, इच्छा, प्रयत्न, संख्या, परिमाण, पृथक्त्व, संयोग and विभाग.

---

### St. VIII.

किं शिखण्डिना सत्तायोगेन—Possession of सत्ता which is fruitless. The allusion is to the famous character (शिखण्डिन्) in the Mahâ-Bhârata, whom Bhîṣma refused to fight because he was originally a girl. शिखण्डिन् was thus neither a male nor a female and, therefore, the word stands for what is fruitless. The whole passage is borrowed from Hemacandra's Pramâna-Mîmâṃsâ I. i. 33: यदि द्रव्यादत्यन्तविलक्षणं सत्त्वं तदा द्रव्यमसदेव भवेत्। सत्तायोगात् सत्त्वमस्त्येवेति चेत् असतां सत्त्वयोगेऽपि कुतः सत्त्वम्। सतां तु निष्फलः सत्तायोगः। स्वरूपसत्त्वं भावानामस्त्येवेति चेत् तर्हि किं शिखण्डिना सत्तायोगेन। सत्तायोगात् प्राग्भावो न सन्नाप्यसन्। सत्तासंबन्धात्तु सन्निति चेत् वाङ्मात्रमेतत् सदसद्विलक्षणस्य प्रकारान्तरस्यासंभवात्—see pp. 49-50.

लाक्षणिकाः—Grammarians.

नट्ठंभि etc.—उत्पन्नेऽनन्ते नष्टे च छाद्मस्थिके ज्ञाने। रात्र्यां संप्राप्तो महासेनवनमुद्यानम्—छाद्मस्थिकज्ञान is the state immediately preceding केवलज्ञान.

दानादिलब्धिवत्—See तत्त्वार्थसूत्रभाष्य on II. 5:—लब्धयः पञ्चविधा दानलब्धिर्लाभलब्धिर्भोगलब्धिरुपभोगलब्धिर्वीर्यलब्धिरिति—where लब्धि is something like the सिद्धि of Yoga. See Syâdvâda-Ratna.

---

### St. IX.

द्रव्यालङ्कारकारः—Râmacandragaṇi. See Jainagranthâvali p. 73.

गन्धहस्त्यादिषु—गन्धहस्तिभाष्य is said to have been a commentary by Samantabhadra on तत्त्वार्थसूत्र, which is lost. आप्तमीमांसा of Samantabhadra is its Introduction, which has two commentaries one short (अष्टशती) and the other long (अष्टसहस्री) by Akalaṅka and Vidyânandin respectively. The last three are available and have been printed.

---

### St. X.

वैशेषिकनैयायिकयोः समानतन्त्रत्वात्—For the latest discussion on the relative chronology of the Vaiśeṣika and the Nyâya Sûtras see Dr. H. N. Randle's "Indian Logic in the Early Schools" pp. 6-8. I agree in his conclusion.

यौगमत—The Nyâya system of Akṣapâda Gautama. The kinship of Nyâya and Vaiśeṣika is paralleled by the close connection of their religious schools, viz. 'शैव' and 'पाशुपत' which both belong to S'aivism. Guṇaratna observes: "परं शास्त्रेषु नैयायिकाः सदा शिवभक्तत्वात् शैवा इत्युच्यन्ते वैशेषिकास्तु पाशुपता इति ॥" The practice of योग, perhaps in a striking form, which seems to have given the name 'यौगs' to the Naiyâyikas ( the school of गौतम अक्षपाद ) was, however, no less a feature of the Vaiśeṣika school. Thus, Praśastapâda, a great Vaiśeṣika, concludes his Bhâṣya as follows;

"योगाचारविभूत्या यस्तोषयित्वा महेश्वरम् ।
चक्रे वैशेषिकं शास्त्रं तस्मै कणभुजे नमः ॥"

For "the whole text from छलं तत्त्रिधा to इति निग्रहस्थानम् is taken verbatim from Guṇaratna's Tarkarahasyadîpikâ" read "The whole text from छलं तत्त्रिधा to इति निग्रहस्थानम् is reproduced verbatim in Guṇaratna's Tarakarahasyadîpikâ."

In the Bibliography suggested at the end, add Hemacandra's Pramâṇamîmâṃsâ.

अर्थोपलब्धिहेतुः प्रमाणम्—Vâtsyâyana Bhâṣya on the Nyâya-Sûtras, p. 94, l. 5. Quoted also in the Pramāṇamîmāṃsâ I. i. 8, p. 11.

---

## St. XI.

चातुर्गतिकसंसारं etc.—नारक, तिर्यञ्च्, मानुष and देव, enumerated here in the ascending order—perhaps with the exception of Tirthaṃkaras who though men are reckoned as superior to gods. For the classification see Tattvârtha-Sûtra.

त्रेताग्निः—The three fires viz. दक्षिण, आहवनीय and गार्हपत्य.

आरनालः—तन्दुलजातिविशेषः and

धूमांशः—सालवृक्षः साग इति भाषायाम्—says AMP.—I do not know on what authority.

ग्लानाद्यसंस्तरः—'संयमानिर्वाहः' AMP.=failure to observe the vow.

आधाकर्मादि०—आधाय साधूंश्चेतसि प्रणिधाय यत् क्रियते भक्तादि तदाधाकर्म । पृषोदरादित्वादिति यलोपः । आधानं साधुनिमित्तं चेतसः प्रणिधानं यथा मुक्तस्य साधोः कारणेन मया भक्तादि पचनीयमिति । आधया कर्म पाकादिक्रिया आधाकर्म । तद्योगाद् भक्ताद्यपि आधाकर्म । *i. e.*—Preparing a dinner with the object of serving it to a Sâdhu.

नवकोटि etc.—"१ स्वयं हननं, २ अन्येन घातनं, ३ अपरेण हन्यमानस्यानुमोदनं, ४ स्वयं पचनं, ५ अन्येन पाचनं, ६ अपरेण पाच्यमानस्यानुमोदनं, ७ स्वयं क्रयणं, ८ अन्येन क्रायणं, ९ अपरेण क्रीयमाणस्यानुमोदनम्—इति मलयगिर्याचार्यकृतायां पिण्डनिर्युक्तिविवृतौ उद्गमद्वारे गा. ४०२"—AMP. foot-note on p. 88.

पञ्चकादियतनया etc.—"तत्थेव अन्यगामेवुच्छन्तर असंभरंत जयणाए। संथरणे सणमादि छन्नं कडजोगी गीयत्थे"—प्रथमतस्तत्रैव ग्रामे प्रायोग्यमन्वेषणीयम्। तत्र यदि न लभ्यते तदान्यग्रामेऽपि। अथासावन्यग्रामो दूरतरस्ततोऽन्तरालेऽनान्तरालग्राम उषित्वा द्वितीये दिने आनयन्ति। अथैवमप्यसंस्तरणं भवति ततः अकारप्रश्लेषादसंस्तरतोग्लानस्यार्थाय यतनया पञ्चपरिहारिण्या गृह्णन्ति। अथ ग्लानार्थं व्यापृतानां परिचारकाणां संस्तरणं तत एषणादोषेषु आदिशब्दादुद्गमादिदोषेषु च पञ्चकपरिहाण्या यतितव्यम्। अथ प्रतिदिवसं ग्लानप्रायोग्यं न लभ्यते ततश्छन्नमप्रकटं कृतयोगी गीतार्थो वा प्रायोग्यं द्रव्यं परिवासयन्ति। यथाकार्णितछेदश्रुतार्थः प्रत्युच्चारणासमर्थः कृतयोगी यस्तु छेदश्रुतार्थं श्रुत्वा प्रत्युच्चारयितुमीशः स गीतार्थ उच्यते।"—बृहत्कल्पसूत्रे उद्देशे बृहच्छालीयश्रीक्षेमकीर्तिसूरिकृतटीकायाम्। समासार्थोऽपि तत्रैव।"—AMP. footnote on p. 89.

Add as an Appendix to the discussion relating to हिंसा versus अहिंसा the following interesting and parallel passage from Kumârapāla Prabandha of Jinamaṇḍanagaṇi:—

1. न विना जीवघातेन मांसं भवति कुत्रचित्। जीवघातस्तु न श्रेयांस्तस्मान्मांसं परित्यजेत् ॥ १ ॥ न भक्षयति यो मांसं न हन्यान्न च घातयेत्। स मित्रं सर्वभूतानां मनुः स्वायंभुवोऽब्रवीत् ॥२॥ इति मनुस्मृतौ ॥ वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः। मांसानि च न खादेत तयोः पुण्यफलं समम् ॥ स्कन्दपुराणे—"भोक्ताऽनुमन्ता संस्कर्ता क्रयिविक्रयिहिंसकाः। उपकर्ता घातयिता हिंसकश्चाष्टधाऽधमाः ॥ १ ॥ यः स्वार्थं मांसपचनं कुरुते पापमोहितः। यावन्ति पशुरोमाणि तावत्स नरकं व्रजेत्॥२॥ परप्राणैस्तु ये प्राणान् स्वान् पुष्णन्ति हि दुर्धियः। आकल्पं नरकान् भुक्त्वा ते युज्यन्तेऽत्र तैः पुनः ॥३॥ जातु मांसं न भोक्तव्यं प्राणैः कण्ठगतैरपि। भोक्तव्यं तर्हि भोक्तव्यं स्वमांसं नेतरस्य च ॥४॥ क्व मांसं क्व शिवे भक्तिः क्व मद्यं क्व शिवार्चनम्। मद्यमांसरतानां हि दूरे तिष्ठति शङ्करः ॥ ५॥ स्कन्दपुराणे—धनेन क्रायको हन्ति उपभोगेन खादकः। घातको वधबन्धाभ्यामित्येष त्रिविधो वधः ॥

यदि वेदेषु जीवदयाऽस्ति तर्हि सकलशास्त्रसंवादशुद्धां जीवदयां कुर्वाणाः कथं वेदबाह्याः। यदाहुः—अहिंसा प्रथमो धर्मः सर्वशास्त्रेषु विश्रुतः। यत्र जीवदया नास्ति तत्सर्वं परिवर्जयेत ॥ १ ॥ श्रूयतां धर्मसर्वस्वं, श्रुत्वा चैवावधार्यताम्। आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ २ ॥ सर्वे वेदा न तत् कुर्युः सर्वे यज्ञाश्च भारत। सर्वे तीर्थाभिषेकाश्च यत्कुर्यात् प्राणिनां दयां ॥ ३ ॥ ध्रुवं प्राणिवधो यज्ञे नास्ति यज्ञस्त्वहिंसकः। सर्वसत्त्वेष्वहिंसैव दयायज्ञो युधिष्ठिर ॥ ४ ॥ अथ वेदेषु दया नास्ति तर्हि न प्रमाणं वेदाः नास्तिकधर्मशास्त्रवत्। जीवो यत्र शिवस्तत्र न भेदः शिवजीवयोः ॥ "न हिंस्यात् सर्व भूतानि" इति ॥ न वेदैर्नैव दानैश्च न तपोभिर्न चाध्वरैः। कथंचित्सद्गतिं यान्ति पुरुषाः प्राणिहिंसकाः ॥ इत्यादि धर्मशास्त्राणि जानद्भिः पठद्भिश्च वेदाः सर्वजीवहिंसा मातृपितृगोमेधादियज्ञप्ररूपकाः येः

प्रमाणीक्रियन्ते त्वैर्नास्तिकशास्त्राणि कस्मान्निराक्रियन्ते ॥ अन्धे तमसि मज्जामः पशुभिर्ये यजामहे । हिंसा नाम भवेद्धर्मो न भूतो न भविष्यति ॥ .........अथ भगवन् । यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयंभुवा । यज्ञोऽस्य भूत्यै सर्वस्य तस्माद्यज्ञे वधोऽवधः ॥ औषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा । यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितिं पुनः । इत्यादि वदन्तो द्विजा वेदोक्तहिंसाया धर्मसाधनत्वं प्राहुः तत्कथम् । सूरिः—राजन् । नैतत् सत्यम् । यतः स्कन्दपुराणे—अग्निर्वै मीयमिति या पश्वालम्भनकारिका । सा न प्रमाणं ज्ञातॄणां भ्रामका सा सतामिह ॥ वृक्षां-श्छित्त्वा पशून् हत्वा कृत्वा रुधिरकर्दमम् । दग्ध्वा वह्नौ तिलाज्यादि चित्रं स्वर्गोऽभि-लष्यते ॥ तथा श्रीभागवतपुराणे त्रयोविंशत्यध्याये शुकः—"ये त्विह दाम्भिका दम्भयज्ञेषु पशून् विशसन्ति तानमुष्मिन् लोके वैशसे नरके पतितान् निरयपतयो यातयित्वा विशसन्ति" इत्यादि ॥ मीमांसायाम् "अन्धे तमसि मज्जामः पशुभिर्ये यजामहे । हिंसा नाम भवेद्धर्मो न भूतो न भविष्यति ॥" श्रीभागवतपुराण एकादशा-ध्याये ब्राह्मण उवाच "तथैव राजन्नुरुगार्हमेधवितानविद्योरुविजृम्भितेषु । न वेदवादेषु हि तत्त्ववादः प्रायेण शुद्धोऽनुचकास्ति साधुः" ॥ किंच "यज्ञार्थं पशवः सृष्टा यदीति वदति स्मृतिः । तन्मांसमश्नतः स्मार्ता वादयन्ति न किं नृपान् ॥ यदि यज्ञार्थं पशवः सृष्टास्तर्हि व्याघ्रादिभिर्देवाः किं न तृप्यन्ते । अहिंसासंभवो धर्मः स हिंसातः कथं भवेत् ॥ न तोयजानि पद्मानि जायन्ते जातवेदसः ॥ तथाच धर्मसमु-द्देशे—"आत्मवत् सर्वजीवेषु कुशलवृत्तिचिन्तनम् । धर्मस्याधिगमोपायः शक्तित-स्त्यागतोऽप्ययम् ॥ इति ॥ श्रीभोजराजाग्रे धनपालवाक्यम्—'नाहं स्वर्गफलो-पभोगतृषितो नाभ्यर्थितस्त्वं मया । संतुष्टस्तृणभक्षणेन सततं साधो न युक्तं तव । स्वर्गं यान्ति यदि त्वया विनिहता यज्ञे ध्रुवं प्राणिनो यज्ञं किं न करोषि मातृपितृभिः पुत्रैस्तथा बान्धवैः ॥" इत्यादिहेमसूरिवाक्यामृतसिक्तहृदयः श्रीचौलुक्यो वेदोक्त-मार्गस्याप्रमाणत्वममन्यत ॥

—Kumârapâlaprabandha.

2. अविशेषश्चोभयोः ॥ १, ६ ॥—उभयोरेव दृष्टादृष्टयोरत्यन्तदुःखनिवृत्त्यसाध-कत्वे यथोक्तहेतुत्वे चाविशेष एव मन्तव्य इत्यर्थः । एतदेव कारिकायामुक्तम्—दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः इति । गुरोरनुश्रूयत इत्यनुश्रवो वेदः तद्विहितयागादिरानुश्राविकः । स दृष्टोपायवदेवाशुध्या हिंसादिपापेन विनाशि सातिशयफलकत्वेन च युक्त इत्यर्थः । न न वैधहिंसायाः पापजनकत्वे बलवदनिष्टा-ननुबन्धेष्टसाधनत्वरूपस्य विध्यर्थस्यानुपपत्तिरिति चेन्न । वैधहिंसाजन्यानिष्टस्येष्टो-त्पत्तिनान्तरीयकत्वेनेष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकत्वरूपस्य बलवदनिष्टा-ननुबन्धित्वस्य विध्यंशस्याक्षतेः । यत्तु वैधहिंसातिरिक्तहिंसाया एव पापजनकत्व-मिति तदसत् । संकोचे प्रमाणाभावात् । युधिष्ठिरादीनां स्वधर्मेऽपि युद्धादौ ज्ञाति-वधादिप्रत्यवायपरिहाराय प्रायश्चित्तश्रवणाच । तस्माद्यास्यामहं तात दृष्ट्वेमं दुःख-संनिधिम् । त्रयीधर्ममधर्माढ्यं किंपाकफलसंनिभम् । इति मार्कण्डेयवचनाच । अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्य इति श्रुतिस्तु वैधातिरिक्तहिंसानिवृत्तेरिष्टसाधन-त्वमेव वक्ति न तु वैधहिंसाया अनिष्टसाधनत्वाभावमपीत्यादिकं योगवार्तिके

द्रष्टव्यमिति दिक् ॥ दुःखाद् दुःखं जलाभिषेकवन्न जाड्यविमोकः ॥ १८४ ॥ आनुश्रविकात्तु हिंसादिदोषेण दुःखात्मकभोगेन च दुखाद् दुःखं दुःखधारैव भवति, न तु जाड्यविमोकोऽविवेकनिवृत्तिः । दुःखविमोकस्त्वतिदूर एव तिष्ठति । यथा जाड्यार्तस्य जलाभिषेकाद् दुःखनिवृत्तिरेव भवति न तु जाड्यविमोक्ष इत्यर्थः । तदुक्तम्--
यथा पङ्केन पङ्काम्भः सुरया वा सुराकृतम् । भूतहत्यां तथैवैकां न यज्ञैर्मार्ष्टुमर्हति ।

—Sâṁkhya-sûtras with Bhâṣya.

3. A few texts bearing on the subject of अहिंसा will also be found in Mâṭhara-Vṛtti on the Sâṃkhya Kârikâs.

4. For a fairly long list of texts bearing on अहिंसा and यज्ञ and translated in the various volumes of the "Sacred Books of the East" see "*Ahiṃsâ*" in (a) Jaina religion, (b) in Buddhism and (c) in Brahmanism on pp. 30–32 and "Sacrifice—(d) Relative value or worthlessness of sacrifice, and symbolical sacrifice" on pp. 482–83 in Winternitz' "Concise Dictionary of Eastern Religion."

5. A most interesting and instructive treatment of the subject with a long list of quotations made from the MBh and the Puranas and the Smṛtis will be found in the edition of the Sâṁkhya Kârikas with Sâṃkhya-Tattvakaumudi annostated by Bâlârama Udâsîna of Benares.

The texts of S'ruti, Smṛti, Mahâbhârata and Purâṇas, as well as the views of Sâṁkhya, Vedânta and Bhakti schools of religion cited in the Syâdvâdamañjari and in the extracts given above leave no doubt that there was a strong body of opinion even in Brahmanism which revolted against हिंसा, even वैधहिंसा (*i. e.* हिंसा prescribed in S'âstras, such as animal slaughter in a sacrifice ). This trend of thought seems to have come down from times earlier than the rise of Jainism and Buddhism, mainly in the Bhakti and Jñâna schools as distinguished from the ritualist school of Brahmanism.

---

**St. XII.**

मीमांसकभेदभट्टानाम्—The school of Kumârila Bhaṭṭa is one of the two famous schools of Mîmâṃsâ *i. e.* Pûrva Mîmâṃsâ;

the other being that of Prabhâkara or 'Guru' as he is generally styled. The differences of the two schools on certain problems of philosophy are radical. See Dr. Ganganath Jha's thesis on the " Prabhâkara School."

यौगानां—see supra.

लब्ध्युपयोगं—लब्धिः=अर्थग्रहणशक्तिः, उपयोगः=अर्थग्रहणव्यापारः
( Footnote in AMP. p. 95 ).

" लब्ध्युपयोगौ भावेन्द्रियम्—लब्धिरुपयोगश्च भावेन्द्रियं भवति। लब्धिर्नाम गतिजात्यादिनामकर्मजनिता तदावरणीयकर्मक्षयोपशमजनिता चेन्द्रियाश्रयकर्मोदयनिर्वृत्ता च जीवस्य भवति। सा पञ्चविधा। तद्यथा। स्पर्शनेन्द्रियलब्धिः, रसनेन्द्रियलब्धिः, घ्राणेन्द्रियलब्धिः, चक्षुरिन्द्रियलब्धिः, श्रोत्रेन्द्रियलब्धिरिति"—Tattvârtha Sûtra II. 18 and Bhâṣya. भावेन्द्रियs *i. e.* subjective senses. Sense-faculties are of two kinds: ( 1 ) लब्धि ( it is the attainment of manifestation of the sense-faculty by the partial destruction, subsidence and operation of the knowledge-obscuring karma relating to that sense. ); ( 2 ) उपयोग ( the conscious attention of the soul directed to that sense. )—Tattvârtha translated by Mr. J. L. Jaini in "The Sacred Books of the Jainas." More briefly, "इन्द्रियनिर्वृत्तिहेतुः क्षयोपशमविशेषौ लब्धिः तन्निमित्तः परिणामविशेष उपयोगः।" ( Headnote to the Tattvârtha-S'loka-Vârtika on T. S. II. 18 ).

भट्टास्तावदिदं वदन्ति—Partly drawn from Ratnaprabhâcârya's Ratnâkarâvatârikâ on P. N. T. ( p. 37 ) and simplified: Cf. अत्रेयं भट्टचट्टघट्टना—ननु न स्वसंवेदनं वेदनस्य सुन्दरम्। स्वात्मनि क्रियाविरोधात् इत्यस्य पारोक्ष्यमेवाक्षुण्णं कक्षीकरणीयम्। तदेतदरमणीयम्। यतः—किमुत्पत्तिः ज्ञप्तिर्वा स्वात्मनि विरुध्येत ?। यद्युत्पत्तिः, सा विरुध्यताम्। न हि ज्ञानमात्मानमुत्पादयतीति वयमध्यगीष्महि। अथ ज्ञप्तिः, नेयमात्मनि विरोधमदीधरत्। तदात्मनैव ज्ञानस्य स्वकारणकलापादुत्पादात् प्रकाशात्मनेव प्रदीपाकलिकालोकस्य। अथ प्रकाशात्मनैव प्रदीपालोकोऽयमुदयमासिवानिति परप्रकाशकोऽस्तु, आत्मानमप्येतावन्मात्रेणैव प्रकाशयतीति तु कौतस्कुती नीतिः ? इति चेत्। तत् किं तेनाप्रकाशितेनैव वराकेण स्थातव्यम् आलोकान्तराद् वा प्रकाशेनास्य भवितव्यम् ?। प्रथमे, प्रत्यक्षबाधा। द्वितीयेऽपि, सैवानवस्थापत्तिश्च। अथ नाऽसौ स्वमपेक्ष्य कर्मतया चकास्ति, इत्यप्रकाशकः स्वीक्रियते, प्रकाशरूपतयोत्पन्नत्वात् स्वयं प्रकाशत एवेति चेत् अनेनैव सुधामद्धि। नहि वयमपि ज्ञानं कर्मतयैव प्रतिभासमानं स्ववेद्यमावेदयामहि, ज्ञानं स्वयं प्रतिभासत इत्याद्यकर्मकस्य तस्य

चक्रामननात्। यथा तु ज्ञानं जानामीति कर्मतयापि तद् भाति यथा प्रदीपः स्वं प्रकाशयतीत्ययमपि तथा प्रथत एव।........

सत्संप्रयोगे........ इत्येवं त्रिपुटीकल्पना भट्टानां प्रयासफलैव ॥ Cf. Hemacandra's Pramāṇamīmāṃsā for the necessary grounds: येऽपि 'तत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म सत्प्रत्यक्षं यद्विषयं ज्ञानं तेन संप्रयोगे इन्द्रियाणां पुरुषस्य बुद्धिजन्म। सत्प्रत्यक्षं यदन्यविषयं ज्ञानमन्यसंप्रयोगे भवति न तत्प्रत्यक्षम्''—इत्येवं तत्सर्वतो व्यत्ययेन लक्षणमनवद्यमित्याहुः—तेषामपि क्लिष्टकल्पनैव संशयज्ञानेन व्यभिचारानिवृत्तेः। तत्र हि यद्विषयं ज्ञानं तेन संप्रयोग इन्द्रियाणामस्त्येव। यद्यपि चोभयविषयं ज्ञानं तथापि तयोरन्यतरेणेन्द्रियेण संयुक्तमेव। उभयावमर्शित्वाच्च संशयस्य। तेन संयुक्तं चक्षुस्तद्विषयमपि तज्ज्ञानं भवत्येवेति नातिव्याप्तिपरिहारः। अव्याप्तिश्च चाक्षुषज्ञानस्येन्द्रियसंप्रयोगत्वाभावात्। अप्राप्यकारि च चक्षुरित्युक्तप्रायम् ॥

यौगास्त्वाहुः—The whole of this is substantially and almost verbatim taken from Ratnaprabhācārya's Ratnākarāvatārikā. Cf. ' अथ यौगाः संगिरन्ते—अहो आर्हताः नास्मिन् मीमांसके वराके व्यपाकृतेऽपि संवेदने स्वसंवेदनदोहदः पूरयितुं पार्यते। तथाहि—ज्ञानं स्वान्यप्रकाश्यम् ईश्वरज्ञानान्यत्वे सति प्रमेयत्वात् यदेवं तदेवं यथा घटः तथा चेदं तस्मात्तथा। समुत्पन्नं हि ज्ञानमेकात्मसमवेतानन्तरसमयसमुत्पादिष्णुमानसप्रत्यक्षेणैव लक्ष्यते न पुनः स्वेन। न चैवमनवस्थावल्लेरुल्लासः अथावसायिवेदनोत्पादमात्रेणैवार्थसिद्धेः तद्धि पदार्थपरामर्शस्वभावमेवइत्युत्पन्नमात्रमेव पदार्थप्रथामनोरथस्थितं कृतार्थयति प्रमातारम्। अर्थज्ञानजिज्ञासायां तु तत्रापि ज्ञानमुत्पद्यत एवेति।

तदेतदेतेषां मतेस्तरलतां तनोति। प्रकटितप्रयोगे पक्षस्यानुमानेन मानखण्डनात्। तथा च तावकाकूतेन तत्र हेतोः कालात्ययापदिष्टत्वनिष्टङ्कनाच्च। तथाहि—विवादास्पदं ज्ञानं स्वसंविदितं ज्ञानत्वात् ईश्वरज्ञानवत्। वाद्यसिद्धमेतन्निदर्शनम् जैनैरीश्वरास्वीकारेण तज्ज्ञानस्य तेषामप्रसिद्धेः इति चेत्। तदचतुरस्रम्। अनवद्यविद्याविद्याधरीबन्धुरपरिष्वङ्गस्य पुरुषातिशेषविशेषस्य खण्डपरशोः स्वीकारात् त्रिविष्टपघटनलम्पटपटिम्नः सकलावलोकनकौशलशालिन एव चास्य तिरस्कारात्। व्यर्थविशेष्यश्चात्र हेतुः। समर्थविशेषणोपादानेनैव साध्यसिद्धेः धूमध्वजसिद्धौ धूमवत्त्वे सति द्रव्यत्वादितिवत्। न हीश्वरज्ञानादन्यत् स्वसंविदितमप्रमेयं चास्ति यदपोहाय प्रमेयत्वादिति क्रियते। अप्रयोजकश्चायं हेतुः। सोपाधिकत्वात्। साधनाव्यापकः साध्येन समव्याप्तिकः खलूपाधिरभिधीयते तत्पुत्रत्वादिना श्यामत्वे साध्ये शाकाद्याहारपरिणामवत्। कः पुनरुपाधिरत्र सूक्ष्मेक्षणैरीक्षाञ्चक्रे इति चेत् उच्यते—निबिडजडिमन् जडिमलक्षणः। तथाहि—ईश्वरज्ञानान्यत्वे प्रमेयत्वे सत्यपि यदेव जडिमपात्रं पात्रादि तदेव स्वस्मादन्येनैव प्रकाश्यते। स्वप्रकाशे

परमुखोत्प्रेक्षित्वं हि जडस्य लक्षणम् । न च ज्ञानं जडस्वरूपम् इति सिद्धं साधनाव्यापकत्वं जाड्यस्य साध्येन समव्याप्तिकत्वं चास्य स्पष्टमेव जाड्यं विहाय स्वप्रकाशाभावस्य तं च त्यक्त्वा जाड्यस्य क्वचिदप्यदर्शनादिति ॥

यच्चोक्तं समुत्पन्नं हि ज्ञानमेकात्मसमवेतेत्यादि तदपि नावितथम् । इत्थमर्थज्ञानतज्ज्ञानयोरुत्पद्यमानयोः क्रमानुपलक्षणात् । आशूत्पादादत्र क्रमानुपलक्षणमुत्पलपत्रशतव्यतिभेदवदिति चेत् । तदचारु । जिज्ञासाव्यवहितस्यार्थज्ञानज्ञानस्योत्पादप्रतिपादनात् । न च जिज्ञासासमुत्पाद्यत्वं संवेदनानां संगच्छते । अजिज्ञासितेष्वपि योग्यदेशेषु गोचरेषु तदुत्पादप्रतीतेः । न चायोग्यदेशमर्थज्ञानम् । आत्मसमवेतस्यास्य समुत्पादात् इति जिज्ञासामन्तरेणैवार्थज्ञाने ज्ञानोत्पादप्रसङ्गः । बाढमुत्पद्यतां नामेदम् । को दोषः इति चेत् । नन्वेवमेव तज्ज्ञानज्ञानेऽप्यपर ज्ञानोत्पादप्रसङ्गः । तत्रापि चैवमेवायम् । इत्यपरापरज्ञानोत्पादपरम्परायामेकात्मनो व्यापाराद् न विषयान्तरसंचारः स्यात् । इति न ज्ञानस्य ज्ञानान्तरज्ञेयताऽपि युक्तिमार्गमवगाहते ॥

1. The position of the Jainas on the problem, whether ज्ञान is स्वतोग्राह्य ( स्वयंप्रकाश ) or परतोग्राह्य ( परप्रकाश ) is thus stated in the P. N. T. स्वपरव्यवसायिज्ञानं प्रमाणम् ( I. 2. ) ज्ञानादन्योऽर्थः परः ( I. 15. ) तदुभयमुत्पत्तौ परत एव, ज्ञप्तौ तु स्वतः परतश्च ( I. 20 ).

2. See on a kindred point, Anantavîrya's लघुवृत्ति on Mâṇikyanandin's परीक्षामुखसूत्रः—

अत्र भवतु नाम उक्तलक्षणलक्षितं प्रमाणं तथापि तत्प्रामाण्यं स्वतः परतो वा । न तावत् स्वतः अविप्रतिपत्तिप्रसङ्गात् । नापि परतोऽनवस्थाप्रसङ्गात् । इति मतद्वयमाशङ्क्य तन्निराकरणेन स्वमतमवस्थापयन्नाह ॥...... अभ्यासदशायां स्वतोऽनभ्यासदशायां च परत इति । तेन प्रागुक्तैकान्तद्वयनिरासः । न चानभ्यासदशायां परतः प्रामाण्येऽप्यनवस्था समाना । ज्ञानान्तरस्याभ्यस्तविषयस्य स्वतः प्रमाणभूतस्याङ्गीकरणात् ॥

In a portion of his commentary Malliṣeṇa has drawn upon Hemacandra's gloss on his ( Hemacandra's ) own work—प्रमाणमीमांसाः—

नन्वनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्गः । मैवं वोचः । ज्ञातुर्ज्ञातृत्वेनेवानुभूतेरनुभूतित्वेनैवानुभवात् । न चानुभूतेरनुभाव्यत्वं दोषः । अर्थापेक्षयानुभूतित्वात्, स्वापेक्षयाऽनुभाव्यत्वात् । स्वपितृपुत्रापेक्षयैकस्य पितृत्वपुत्रत्ववद्विरोधाभावात् । न च स्वात्मनि क्रियाविरोधः । अनुभवसिद्धेऽर्थे विरोधासिद्धेः । अनुमानाच्च स्वसंवेदनसिद्धिः । तथाहि—ज्ञानं प्रकाशमानमेवार्थं प्रकाशयति प्रकाशकत्वात् प्रदीपवत् संवेदनस्य प्रकाशकत्वात् । प्रकाशकमसिद्धमिति चेत्

न। अज्ञाननिरासादिद्वारेण प्रकाशकत्वोपपत्तेः। न च नेत्रादिभिरनैकान्तिकता। तेषां भावेन्द्रियरूपाणामेकमेव प्रकाशकत्वात् भावेन्द्रियाणां च स्वसंवेदनरूपतैव न व्यभिचारः। तथा संवित् स्वप्रकाशा अर्थप्रतीतित्वात्। यः स्वप्रकाशो न भवति नासावर्थप्रतीतिर्यथा घटः तथा यज्ज्ञानं तदात्मबोधं प्रत्यनपेक्षितपरव्यापारं यथा गोचरान्तरग्राहि ज्ञानप्राग्भाविगोचरान्तरग्राहि ज्ञानप्रतिबन्धस्यान्त्यज्ञानम्। ज्ञानं च विवादाध्यासितं रूपादिज्ञानमिति संवित् स्वप्रकाशे स्वावान्तरजातीयं नापेक्षते वस्तुत्वात् घटवत्। संवित् परप्रकाश्या वस्तुत्वात् घटवदिति चेत् न। अस्याप्रयोजकत्वात्। न खलु घटस्य वस्तुत्वात् परप्रकाश्यता अपि तु बुद्धिव्यतिरिक्तत्वात् ॥

Cf. also Hemacandra: स्वपराभासी परिणाम्यात्मा प्रमाता ॥ Pr. M. स्वमात्मानं परं चार्थमाभासयितुं शीलं यस्य स स्वपराभासी स्वोन्मुखतया चावभासनात् घटमहं जानामीति कर्मकर्तृक्रियाणां प्रतीतेः। अन्यतरप्रतीत्यपलापे प्रमाणाभावात्। न च परप्रकाशकत्वस्य स्वप्रकाशकत्वेन विरोधः प्रदीपवत्। नहि प्रदीपः स्वप्रकाशे परमपेक्षते। अनेनैकान्तस्वाभासिपराभासिवादिनिरासः ॥ ( Pr. Mîm. 1.1.43 & Com. )

Note that Hemacandra's definition of प्रमाण differs from that of the authors of the Parîkṣâmukha Sûtra and its Vṛitti. He says: ननु च परिच्छिन्नधर्मं परिच्छिन्दता प्रमाणेन पिष्टं पिष्टं स्यात् तथा च गृहीतग्राहिणां धारावाहिकज्ञानानामपि प्रामाण्यप्रसङ्गः। ततोऽपूर्वार्थनिर्णय इत्यस्तु लक्षणम्। यथाहुः स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणम् इति। तथा अपूर्वार्थविज्ञानम्-इति च तत्राह—ग्रहीष्यमाणग्राहिण इव गृहीतग्राहिणोऽपि नाप्रामाण्यम्। ( १-१-४ ) ॥

अयमर्थः द्रव्यापेक्षया वा गृहीतग्राहित्वं विप्रतिषिध्येत पर्यायापेक्षया वा। तत्र पर्यायापेक्षया धारावाहिकज्ञानानामपि गृहीतग्राहित्वं न संभवति। क्षणिकत्वात् पर्यायाणाम्। तत्कथं तन्निवृत्त्यर्थं विशेषणमुपादीयते। अथ द्रव्यापेक्षया। तदप्ययुक्तम्। द्रव्यस्य नित्यत्वादेकत्वेन गृहीतग्रहीष्यमाणावस्थयोर्न भेदः। ततश्च कं विशेषमाश्रित्य ग्रहीष्यमाणग्राहिणः प्रामाण्यं न गृहीतग्राहिणः। अपि च अवग्रहादीनां गृहीतग्राहित्वेऽपि प्रामाण्यमिष्यत एव ॥

प्रमाणं स्वपराभासि ज्ञानं बाधविवर्जितम्।—Nyāyāvatāra 1.

—इह च व्यवच्छेद्यापेक्षया लक्षणे विशेषणप्रवृत्तेः स्वपराभासि इत्यनेन ये स्वाभास्येव ज्ञानं मन्यन्ते ज्ञानवादिनो बौद्धविशेषाः ये च पराभास्येव मीमांसकनैयायिकादयः ते निरस्ताः ॥—Com. by Siddharṣi.

सर्वज्ञानमनध्यक्षं प्रत्यक्षोऽर्थः परिस्फुटः।
इति केचिदनात्मज्ञाः प्रमाणव्याहतं विदुः ॥

प्रत्यक्षमात्मनि ज्ञानमपरत्रानुमानिकम् ।
प्रत्यात्मवेद्यमाहन्ति तत्परोक्षत्वकल्पनाम् ॥
विज्ञानस्य परोक्षत्वे प्रत्यक्षोऽर्थः स्वयं कथम् ।
सर्वदा सर्वथा सर्वः सर्वस्य न तथा भवेत् ॥
ततः परं च विज्ञानं किमर्थमुपकल्प्यते ।
कादाचित्कत्वसिध्यर्थमर्थज्ञप्ते न सा परा ॥
विज्ञानादित्यनध्यक्षात् कुतो विज्ञायते परः ।
लिङ्गाचेत् तत्परिच्छित्तिरपि लिङ्गान्तरादिति ।
क्वावस्थानमनेनैव तयार्थापत्तिराहता ।
अविज्ञातस्य सर्वस्य ज्ञापकत्वविरोधतः ॥
स्वसंवेद्यान्तरादन्याद्विज्ञानं किं करिष्यते ।
करणेन विना कर्तुः कर्माणि व्यावृतिर्न चेत् ॥
स्वसंवित्तिक्रिया न स्यात् स्वतः पुंसोऽर्थवित्तिवत् ।
यदि स्वात्मा स्वसंवित्तावात्मनः करणं मतम् ॥
स्वार्थवित्तौ तदेवास्तु ततो ज्ञानं स एव नः ।
ज्ञानं ज्ञानान्तराद्वेद्यं स्वात्मज्ञप्तिविरोधतः ।
प्रमेयत्वाद्यथा कुम्भ इत्यप्यश्लीलभाषितम् ॥
ज्ञानान्तरं यदी ज्ञानादन्यस्मात्तेन विद्यते ।
तदानवस्थितिप्राप्तेरन्यथा ह्यविनिश्चयात् ॥
अर्थज्ञानस्य विज्ञानं नाज्ञातमवबोधकम् ।
ज्ञापकत्वाथाक्षलिङ्गलिङ्गिनो नान्यथा स्थितिः ॥

4. नान्यथा ह्यर्थसद्भावो दृष्टः सन्नुपपद्यते ।
ज्ञानं चेन्नेत्यतः पश्चात् प्रमाणमुपजायते ॥
—S'l. Vârt. V. S'ûnyavâda 182.

तत्र केचिदाहुः । सर्वथा तावदस्ति ज्ञानम् । तथा हि विद्यमान एव हि घटः कस्यचिदेव व्यवहारयोग्यतामापद्यते न सर्वेषां, नापि सर्वदा; तदवश्यं यो यदा तेन व्यवहरति तस्य तद्व्यवहारानुगुणः कश्चिदतिशयः संजात इति कल्पनीयम् स ज्ञानम् इति ॥ सत्यम् । एवं सिध्यति ज्ञानं किंतु प्रागपि व्यवहारादवगम्यते ज्ञानम् अव्यवहरन्नपि ज्ञातोऽयमर्थो मयेति आत्मनाऽर्थस्य ज्ञातत्वमनुसंधत्ते इति सर्वजनीनमेतत् । न च ज्ञानमविदुषां ज्ञातत्वरूपत्वं शक्यं वेदितुम् यदेव प्रागेव व्यवहारादुपजायमानो ज्ञातत्वावगमोऽसति ज्ञानस्य प्रत्यक्षत्वे कथमुपपद्यते ॥ अत्राहुः । ज्ञानजन्योऽर्थगतः कश्चिदतिशयः प्रकाशनभासनादिपर्यायपदवाच्यः । स च पाकगन्धौनादिगतातिशयवदनवगतेऽपि ज्ञाने शक्यतेऽवगन्तुम् । अतः ज्ञानस्य कल्पक इति । सत्यम् अस्त्यतिशयः, स च प्रत्यक्षेऽर्थे प्रत्यक्षावगतः कल्पयेदपि ज्ञानम् । अनुमानादिषु तु तस्या-

प्रत्यक्षत्वात् प्राग्व्यवहारात्तु द्वयाप्तलिंगाभावादप्रमितस्य चाकल्पकत्वान्न ज्ञानं कल्पयेत् । अनुमितेऽपि चार्थे ज्ञातो मयाऽग्निरिति अग्निं ज्ञातमनुसंधत्ते । अतस्तत्त्वं वक्तव्यम् । ज्ञाने प्रमाणमुच्यते । ज्ञानक्रियाजनितो ज्ञातुर्ज्ञेयेन सहाप्तत्वसंबन्धः । स मानसप्रत्यक्षावगतो ज्ञानं कल्पयति सत्यां जिज्ञासायाम् । यत्रापि च कश्चिदर्थमनुभूय तद्विषयं ज्ञानमकल्पयित्वैव कालान्तरे तमर्थं स्मरामि तत्रापि स्मृतिज्ञानेनैवात्मनोऽर्थस्य च दृश्यदृष्टत्वसंबन्धे निष्पन्ने मानसप्रत्यक्षेण चावगते तद्बलेन च ज्ञाने कल्पिते तस्य ज्ञानस्येन्द्रियादिप्रत्युत्पन्नकारणाऽसंभवेन स्मृतित्वं निश्चित्य तदनुपपत्त्या पूर्वानुभवः कल्प्यते । यथोक्तं तदैव ह्यस्य संवित्तिर्व्याप्तयोपजायते इति । कः पुनरसौ संबन्धः ? उक्तं प्राप्तिरिति । येऽपि च स्वप्रकाशां संविदं मन्यन्ते तेषामपि स्वोत्पत्तिसमये संवित्तिः स्वात्मानं कर्तारं वेद्यं च भासयति न तु स्वस्य वेत्तुर्वा संवेद्यसंबन्धः तस्य तदाऽनिष्पन्नत्वेनासत्त्वात् ततो निष्पन्नायां संवित्तौ तस्याः कर्तुश्च तद्द्वारा विषयसंबन्धे जाते ततो मानसेनैव प्रत्यक्षेणाऽर्थेन सह संवित्तेः संवेत्तुश्च संबन्धोऽवभासते इति अङ्गीकर्तव्यम् । संविदन्तरोत्पत्तिसमये च पूर्वसंविदा नष्टत्वान्न तद्धर्मत्वेन संवेद्यसंबन्धः शक्यते प्रत्यक्षेण ग्रहीतुमिति संवेत्तृधर्मभूत एव संवेद्यसंबन्धः कोऽपि नाम सर्वजनीनः प्राप्तिपर्यायो गृह्यत इति तत एव संवित्तिरूपक्रियाकल्पनासिद्धेरलं स्वप्रकाशतया । तत्सिद्धमुत्पत्तिवेलायामर्थस्य दृष्टत्वाभावेन फलांशाभावात् न ज्ञानं गृह्यते पश्चात्तु दृष्टत्वांशेन गृह्यत इति ॥

—Nyâyaratnâkara pp. 319–21.

In the Bibliography given at the end of the Notes on this Stanza, add Catuh-Sûtrî, Sûtra I, after S'rî-Bhâṣya on अनुभूति.

To the list add:

4. Tattvârtha S'loka-Vârtika I. Sûtra 10. Verses 35 etc.

And, for S'loka Vârtika on Sûtra 2–4 substitute Kumârila's S'loka Vârtika on प्रत्यक्षसूत्र relevant verses; more especially S'l. Vârt. on 182 etc. on Sûtra V.

---

## St. XIII.

"सर्वं खल्विदं ब्रह्म etc." and "आहुर्विधातृप्रत्यक्षं etc." are quotations which seem to have been borrowed from Devasûri's Syâdvâda-Ratnâkara, the author's own commentary on P.N.T. where they are quoted.

आहुर्विधातृप्रत्यक्षं etc.—This verse, with a difference, occurs in the Tattvârtha S'loka Vârtika as a reply to the verse as it stands here. ( See Aṣtasahasrî, Gândhi Nâthâraṅga Jaina Granthamâlâ, pp. 94–95. ) Thus:—

आहुर्विधातृप्रत्यक्षं न निषेद्धृ विपश्चितः ।
न नानात्वागमस्तेन प्रत्यक्षेण विरुध्यते ।

भवतु नाम विधातृप्रत्यक्षमनिषेद्धृ च तथापि तेन नानात्वविधायिनो नागमस्य [सन्त्यनन्ता जीवा इत्यस्य] विरोधः संभवति एकत्वविधायिन इव । विधायकत्वाविशेषात् । कथमेकत्वमनिषेधत् प्रत्यक्षं नानात्वमात्मनो विदधातीति चेत्, नानात्वमनिषेधदेकत्वं कथं विदधीत ? । तस्यैकत्वविधानेन नानात्वप्रतिषेधकत्वमिति चेत् तदेकत्वस्य किम् ? । न ह्यस्मदादिप्रत्यक्षमिन्द्रियजं मानसं वा स्वसंवेदनमेक एवात्मा सर्व इति विधातुं समर्थं नानात्मभेदेषु तस्य प्रवृत्तेः । योगिप्रत्यक्षसमर्थमिति चेत्, पुरुषनानात्वमपि विधातुं तदेव समर्थमस्तु तत्पूर्वकागमश्चेत्यविरोधः । स्वसंवेदनमेवास्मदादेः स्वैकत्वस्य विधायकमिति चेत्, तथान्येषां स्वैकत्वस्य तदेव विधायकमतुमन्यताम् । कथं—

यथैव च ममाध्यक्षं विधातृ न निषेद्धृ वा ।
प्रत्यक्षत्वात्तथान्येषामन्यथैतत्तथा कुतः ॥

परेषां प्रत्यक्षं स्वस्य विधायकं परस्य न निषेधकं वा, प्रत्यक्षत्वात्, मम प्रत्यक्षवत् । विपर्ययो वा अतिप्रसङ्गविपर्ययाभ्यां प्रत्यात्मसंवेदनस्यैकत्वविधायित्वासिद्धेरात्मबहुत्वसिद्धिरात्मैकत्वासिद्धिर्वा । न च विधायकमेव प्रत्यक्षमिति नियमोऽस्ति निषेधकत्वेनापि तस्य प्रतीयमानत्वात् ॥

It will be noticed that while the verse in the text is the Vedântic plea, the verse in the T. S. Vârtika is a reply to it in the same language taking up the contrary position.

अस्ति ह्यालोचनाज्ञानं etc.—This verse ( Mîm. S'l. Vārtika on Sûtra IV ( Pratyakṣa ), 112 ) has been explained thus by Pārthasārathi in his commentary: यस्तु………सर्वमेव ज्ञानं शब्दानुविद्धत्वात् सविकल्पकमेव न किंचिन्निर्विकल्पकमस्तीति मन्यते तं प्रत्याह— अस्तीति । बालानामिवाव्युत्पन्नानामस्माकमपि चक्षुःपातानन्तरं सविकल्पकात् प्रथममस्ति निर्विकल्पकं प्रतीतिसिद्धमालोचनविज्ञानं शुद्धवस्तुविषयं, तदभावे हि निर्निमित्तं शब्दस्मरणं स्यात् अस्मृतशब्दस्य च शब्दानुविद्धो विकल्पो न संभवतीति शुद्धवस्तुजमित्येतद्विवृणोति । न विशेषो न सामान्यं तदानीमनुभूयते । तयोराधारभूता तु व्यक्तिरेवावसीयते ॥

प्रत्यक्षाद्यवतारः स्यात्—This is the Mîmāṃsaka's and Vedāntin's plea for refusing to admit अभाव as a विषय of प्रत्यक्ष or any of the other प्रमाणs recognised by the Naiyâyika, and consequently for setting up a special प्रमाण for apprehending अभाव, called अनुपलब्धि. The verses on this point run as follows in Mîm. S'l. Vârt. V. 17–18:—

प्रत्यक्षाद्यवतारस्तु भावांशो गृह्यते यदा ।
व्यापारस्तदनुत्पत्तिरभावांशे जिघृक्षिते ॥

—*i. e.* प्रत्यक्ष is possible when something positive, or the positive aspect of a thing, is apprehended; but when अभाव—a negation or negative aspect of a thing—has to be apprehended, the method by which this is done is the fact of 'तदनुत्पत्ति'—*i. e.* प्रत्यक्ष etc. do not arise here to testify to anything positive. This is made clear in the next verse in the Mîm. S'l. Vârt.

न तावदिन्द्रियैरेषा नास्तीत्युत्पद्यते मतिः ।
भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य हि ॥

निर्विशेषं हि सामान्यं etc.—The preceding verse ( Mîm. S'l. Vārt. V.-आकृतिवाद, 9 ) will explain this:

अन्योन्यापेक्षिता नित्यं स्यात् सामान्यविशेषयोः ।
विशेषाणां च सामान्यं ते च तस्य भवन्ति हि ॥

—समानानां हि भावः सामान्यं तत्कथमस्तु बहुषु विशेषेषु स्यात् इदं च विशेषाणां विशेषत्वं यत्समानात्मनो भावात् विशिंषन्ति । तेनान्यतरेण विनेतरस्यात्मलाभाभावात् तस्यापि सिद्धिरिति—

तदेवमुपपादितं द्व्याकारत्वं प्रयोगेण दर्शयति—निर्विशेषं न सामान्यं भवेच्छशविषाणवत् । सामान्यरहितत्वाच्च विशेषास्तद्वदेव हि ॥ निर्विशेषं परकल्पितं सामान्यं धर्मि; नास्तीति साध्यं, तथा निःसामान्या विशेषा न सन्तीति; विशेषरहितत्वात् सामान्यरहितत्वादिति हेतुद्वयम् ॥......

तेन नात्यन्तभेदोऽपि स्यात् सामान्यविशेषयोः ।

The reader will notice how the Mîmâṃsaka, in recognising this aspect, admits the Jaina doctrine of अनेकान्त.

निर्विशेषं हि सामान्यम्—This occurs in Kumârila's S'l. Vârt. Âkṛti. Cf. सर्ववस्तुषु बुद्धिश्च व्यावृत्त्यनुगमात्मिका । जायते द्व्यात्मकत्वेन

विना सा च न सिध्यति ॥ ( S'l. Vârt. Âkṛti-vâda 5 ) विशेषमात्र इष्टे च न सामान्यमतिर्भवेत् । सामान्यमात्रबोधेन न निर्निमित्ता विशेषधीः ॥ (ibid. 6) —"यदि तावदसाधारणं स्वलक्षणमेव वस्तु स्यान्न सामान्यं यथा सौगतैरुच्यते ततोऽयं गौरयमपीति सामान्यबुद्धिर्न स्यात् । यदि तु गोत्वादिशाबलेयादिविशेषानुवृत्तव्यावृत्तात्मनोऽपहुत्य महासामान्यं सन्मात्रमेव वस्त्वङ्गीक्रियते यथा वेदान्तवादिभिरुच्यते ततो गौरयमश्वोयं शाबलेयोयमिति विशेषबुद्धिर्न स्यात् ॥" —Nyâyaratnâkara, Com. on S'l. Vârt.

Kumârila makes a very close approach to the Jaina view on the subject when he says: "अन्योन्यापेक्षिता नित्यं स्यात् सामान्यविशेषयोः । विशेषाणां च सामान्यं ते च तस्य भवन्ति हि । निर्विशेषं न सामान्यं भवेच्छशविषाणवत् । सामान्यरहितत्वाच्च विशेषास्तद्वदेव हि ॥" ( S'l. Vârt-Âkṛti 9–10 ); and further on, in answering the objection of विरोध, Kumârila says: "विरोधस्तावदेकान्ताद्वक्तुमत्र न युज्यते । सामान्यानन्यविज्ञाते विशेषे नैकवृत्तिता । सामान्यानन्यवृत्तित्वं विशेषात्मैकभावतः । एवं च परिहर्तव्या भिन्नाभिन्नत्वकल्पना ॥ केनचिद्ध्यात्मनैकत्वं नानात्वं चास्य केनचित् । सामान्यस्य तु यो भेदं ब्रूते तस्य विशेषतः ॥ दर्शयिस्त्वाऽभ्युपेतव्यं विशेषैक्यं च जातितः । यथा कल्माषवर्णस्य यथेष्टं वर्णनिग्रहः ॥ चित्रत्वाद्वस्तुनोप्येवं भेदाभेदावधारणम् । सामान्यांशे तु निष्कृष्य भेदो येन प्रसाध्यते ॥" ( S'l. Vârt. Âkṛti 54–57 )—which N. R. elucidates in words which remind us of the Jaina doctrine of सामान्य and विशेष regarded as two aspects of one reality: "यदि ह्यनेकवृत्त्येव सामान्यं स्यात् अनन्यवृत्तय एव विशेषाः तयोरेकत्वं विरुध्यते । यदा तु विशेषा अपि सामान्यात्मनाऽनेकवृत्तयः सामान्यं च विशेषात्मनानन्यवृत्ति तदा को विरोध इति । यत्त्वन्याऽनन्यतैव कथमेकस्येत्युक्तं—तत्राह एवमिति । एतदेव दर्शयति केनचिदिति । गोत्वं हि शाबलेयात्मना बाहुलेयाद्भिद्यते । स्वरूपेण च न भिद्यते । तथा व्यक्त्यन्तरादपि व्यक्तिः जात्यात्मना न भिद्यते स्वरूपेण च भिद्यते इति अपेक्षाभेदादविरोधः । समाविशन्ति हि विरुद्धान्यपि एकत्वापेक्षाभेदात् । एकमपि हि किंचिदपेक्ष्य ह्रस्वं किंचिदपेक्ष्य दीर्घं यथैकोऽपि चैत्रो द्वित्वापेक्षया भिन्नोऽपि स्वात्मापेक्षया न भिद्यते । अनेनैकानेकत्वमपि परिहर्तव्यम् । तदेव हि वस्तुस्वरूपेण सर्वत्र सर्वदा चैकमपि शाबलेयादिरूपेणाऽनेकं भवतीति न विरोधः इति ।......... नानावर्णे हि वस्तुनि य एव वर्णो निष्कृष्य दर्शयितुमिष्यते स एव शक्यो दर्शयितुम् । एवं नानारूपे वस्तुनि सर्वस्य भेदाभेदादेः संभव इति ।"

हेतोरद्वैतसिद्धिश्चेत् etc.—(Âptamîmâṃsâ 26) is thus explained in अष्टसहस्रीः—तत्सिद्धिर्यदि साधनात् साध्यसाधनयोस्तर्हि द्वैतं स्यात् ।

अन्यथाऽद्वैतसिद्धिवद्द्वैतसिद्धिः कथं न स्यात् ?। स्वाभिलाषमात्रादर्थसिद्धौ सर्वं सर्वस्य सिध्येत् ॥

कर्मद्वैतं फलद्वैतं etc.—( Âptamîmâṃsâ 25 ) is thus explained in अष्टसहस्री:—लौकिकं वैदिकं च कर्मेति वा कुशलमकुशलं च कर्मानुष्ठानमिति वा, पुण्यं पापं च कर्मेति वा कर्मद्वैतं न स्यात्। तदभावात् इहामुत्र च श्रेयःप्रत्यवायलक्षणं फलद्वैतं न स्यात्, कारणाभावे कार्यस्यानुत्पत्तेः। तत एव इहलोकपरलोकलक्षणं लोकद्वैतं न स्यात्। कर्मादिद्वैतस्यानाद्यविद्योपदर्शितत्वाददोष इति चेन्न। धर्माधर्मद्वैतस्याभावे विद्याविद्याद्वयस्यासंभवाद् बन्धमोक्षद्वयवत्। पूर्वविद्योदयादेव विद्याविद्याद्वयं बन्धमोक्षद्वयं च परमार्थतस्तदसंभवात् 'न बन्धोऽस्ति नैव मोक्ष इत्येषा परमार्थता' इति प्रवचनात् प्रतिभासमात्रस्य परब्रह्मण एव तात्त्विकत्वादिति चेन्न। नैरात्म्यस्यापि तात्त्विकत्वापत्तेस्तत्कल्पनाया नैष्फल्याविशेषात् ॥

---

## St. XIV.

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥—Bhartṛhari's Vâkyapadîya I. 124, which the commentator explains as follows: "काचिदेव सा ज्ञानावस्था सविकल्पाख्या.........शब्दानुविद्धेन शब्दशक्त्यनुपातिना ज्ञानेनोपगृह्यमाणो वस्त्वात्मा ज्ञानानुगतो व्यक्तरूपप्रत्ययभासो ज्ञायत इत्यभिधीयेत तादृश एव च स्मृतिविषयो भवति। अनुभवसमानाकारत्वात्तस्याः।......" Cf. Max-Müller's view that there can be no thought without language. Note, however, that Bhartṛhari's dictum is intended to apply to सविकल्पक consciousness (in the sense of 'सविकल्पक' as used in the Yoga-S'āstra ) only. Cf. Vyākaraṇa Mahābhâṣya ( I. i. 1 ):—"सिद्धे शब्दार्थसंबन्धे—सिद्धे शब्दे अर्थे संबन्धे च—with Kaiyyaṭa's gloss—त्रयाणामात्यन्तिकाविश्लेषप्रदर्शनाय समाहारनिर्देश इति बोध्यम्।...शब्दार्थयोः संबन्धश्च शक्तिरूपं तादात्म्यमेवेत्यन्यत्र प्रपञ्चितम् ॥

ते च द्रव्यास्तिकनयानुपातिनः etc.—For a full exposition of the नय s, see notes on Stanza XXVIII and the books of reference mentioned therein. The Jaina claims that all the different philosophical systems, except his own, embody *partial* truths, while his system is the only one which presents the *Whole* Truth. Thus, Reality which is the primary synthesis of द्रव्य ( substance ) and पर्याय ( mode ) is grasped only fragmentarily

by the other schools, some apprehending and emphasising one aspect and some the other.

ते च द्रव्यास्तिकनयानुपातिनः etc.—For the best exposition of this subject, see the section on नयमीमांसा in Abhayadeva's commentary on Siddhasena Divâkara's Saṃmati-tarka. ( Purā-tattva-mandira Edition, Vol. II, pp. 271–310 ).

ते च द्रव्यास्तिकनयानुपातिनो मीमांसकभेदाः—I was wondering what could be the point of 'भेदाः' in 'मीमांसकभेदाः'—I then remembered the passages which I have quoted above from Kumârila and his commentator. In view of these passages, Kumârila and his commentator certainly deserve to be assimilated with the Syâdvâda school and not classed as mere 'द्रव्यास्तिकनयानुपातिनः'. For a full exposition of द्रव्यास्तिकनय and पर्यायास्तिकनय and the schools which severally fall under them, see Abhayadeva's Commentary on Saṃmatitarka, Chapters on Naya-Mîmâṃsâ.

तथा च पठन्ति—एतासु पञ्चस्ववभासनीषु etc.—I think the title of this work by "Pandita Aśoka" ( as the colophon runs )—who is assigned to circa 900 A. D., is really "सामान्यदूषण(सिद्धि)दिक्" and not "सामान्यदूषणदिक्प्रसारिता" as found in M. M. Dr. Haraprasâda S'âstri's edition of "Six Buddhist Nyâya Tracts" published by the A. S. Bengal and accepted in AMP. edition of the Syâdvâda-mañjarî, footnote, 'प्रसारिता' there being only a predicate of '°दिक्' and meaning has been 'set forth'.

The concluding verse which follows this as a summary of the book is as follows: "प्रत्यक्षप्रतिभासि वर्त्मे ( corrected in the Preface into–धर्मेषु ) न पञ्चस्वङ्गुलीषु स्थितं सामान्यं प्रतिभासते न च विकल्पाकारबुद्धौ तथा। ता एवास्फुटमूर्तयोऽत्र हि विभासन्ते न जातिस्ततः सादृश्यभ्रमकारणौ पुनरिमावेकोपलब्धिध्वनी ॥ *i. e.* "Generality is not found residing in the five fingers whose attributes ( or states or phenomenal being ) we apprehend by perception; nor does it appear in the idea of form which is apprehended by conception. What is perceived is the same fingers distinctly ( then in निर्विकल्पक, now in सविकल्पक ज्ञान ). Therefore there is no such

thing as Generality ( जाति or सामान्य ). That several reals produce one idea and are denoted by one word arises from our confounding likeness with unity or sameness." The general line of reasoning is thus indicated in the opening portion of the work: व्यापकं नित्यमेकं च सामान्यं यैः प्रकल्पितम् । मोहगन्थिच्छिदे तेषां तदभावः प्रसाध्यते । कथमिदमवगम्यते । परस्परविलक्षणक्षणेषु प्रत्यक्षसमीक्ष्यमाणेष्वभिन्नधीध्वनिप्रसवनिबन्धनमनुयायिरूपं सामान्यं न मान्यं मनीषिणामिति । साधकप्रमाणविरहात् बाधकप्रमाणसंभवाच्चेति ब्रूमः । तथाहि यदिदं सामान्यसाधनमनुमानमभिधीयते परैः । यदनुगताकारं ज्ञानं तदनुगतवस्तुनिबन्धनं यथा बहुषु पुष्पेषु स्रक् स्रगिति ज्ञानम् । अस्ति च परस्परसंपर्कविकलकलासु कार्यादिव्यक्तिष्वनुगताकारं विज्ञानं तदप्यनैकान्तिकतादोषाक्रान्तशरीरत्वान्न तद्भावसाधनायालम् । यतो भवति बहुषु पाचकेषु पाचकः पाचक इति एकाकार परामर्शप्रत्ययः । न च तेष्वनुगतमेकं वस्तु समस्ति । तद्भावे हि प्रागेव तथाविधप्रत्ययोत्पादप्रसङ्गो दुर्वारप्रचारः ॥

यच्चास्य पौद्गलिकत्वनिषेधाय स्पर्शशून्याश्रयत्वात् अतिनिबिडप्रदेशे प्रवेशनिर्गमयोरप्रतिघातात् पूर्वं पश्चाच्चावयवानुपलब्धेः सूक्ष्ममूर्तद्रव्यान्तराप्रेरकत्वात् गगनगुणत्वाच्चेति पञ्चहेतवो यौगैरुपन्यस्ताः—The word "यौगैः" denotes both the Nyâya and the Vaiśeṣika systems although more often in this work, the Nyâya. But I have not been able to trace to their source these hetus, which look like sûtras either of the Nyâya or the Vaiśeṣika system, but are not found in their existing sûtras. Cf. एवं विभागसंयोगौ तद्भावादन्ययोगवत् । जैनकापिलनिर्दिष्टं शब्दश्रोत्रादिसर्पणम्—S'l. Vârt. VI. 106, where the commentator presents the Jaina doctrine as follows: "जैनैर्हि शब्दस्यागमनं, परिमाणं, स्पर्शः, तेषां चाभिभवः स्पर्शवत्त्वेऽपि च त्वगिन्द्रियाग्राह्यत्वं, सूक्ष्माश्च भागा पुद्गलरूपाः कल्पिताः ॥"

"In Kârikâs 106–122 [ of this section of the S'l. Vârt. ] we find a refutation against the Jainas, who believe sound to be material and tangible, to travel from its place of origin to our auditory organ, and to consist of component parts ( pudgalas ). [ This is criticised in the following verse. ]

शब्दस्यागमनं तावददृष्टं परिकल्पितम् ।
मूर्तिस्पर्शादिमत्त्वं च तेषामभिभवः सताम् ॥

( VI. 107–108 ).

This belief in the substantiality of sound must have had originally more supporters than the Jainas. In Europe too it has been upheld for a long time and is expressed by Lucretius in his De natura rerum."—"The Vaiśeṣika System" by Dr. Faddegon, p. 189.

In connection with the passage on शब्दार्थसंबन्ध contained in this Stanza and its commentary, consult particularly शब्दनित्यताधिकरण in Kumârila's S'loka Vârtika, the Nyâya Sûtras II. ii, and शब्दार्थतत्संबन्धयोर्मीमांसा in Abhayadeva's commentary on Saṃmatitarka ( Gujarat Purā-tattva-mandira edition Vol. II. )

On p. 165 of the Notes with reference to "यौगास्तु—The Vaiśeṣikas would say" please note that the term 'यौगाः' very often stands for Naiyâyikas, but may apply sometimes to Vaiśeṣikas also. Here, the subject is more in the line of the Vaiśeṣikas than of the Naiyâyikas; and therefore I have said "The Vaiśeṣikas" etc.

विकल्पयोनयः शब्दाः—Quoted in Ratnâkarâvatârikâ I. 9.

सर्वमस्ति स्वरूपेण ( p. 91 of the Sanskrit text )—The verse has been quoted by Hemacandra in Pramâṇamîmâṃsâ p. 44. Before him, it was quoted by Siddharṣi in his commentary on the Nyâyâvatâra. ( Sîddharṣi, the author of Upamitibhava-Prapañcakathâ, completed it in 906 A.D. ).

अभिहाणं अभिहेयाउ etc.—Quoted also by Devabhadra who lived in the second half of the twelfth century, that is about a hundred years before Malliṣeṇa.

Cf. 'शब्दानां न परमार्थतः किंचिद्वाच्यं वस्तुस्वरूपमस्ति । सर्व एव शाब्दप्रत्ययो भ्रान्तः। भिन्नेष्वर्थेष्वभेदाकाराध्यवसायेन प्रवृत्तेः। यत्र तु पारंपर्येण वस्तुप्रतिबन्धस्तत्रार्थसंवादो भ्रान्तत्वेऽपि तत्र यत् तदारोपितं विकल्पबुद्धयार्थेष्वभिन्नं रूपं तद् अन्यव्यावृत्तपदार्थानुभवबलायातत्वात् स्वयं चान्यव्यावृत्ततया प्रतिभासनात् भ्रान्तैश्चान्यव्यावृत्तार्थेन सहैक्यैनानध्यवसितत्वात् अन्यापोढपदार्थाधिगतिफलत्वाच्च अन्यापोह इत्युच्यते। अतः अपोहः शब्दार्थ इति प्रसिद्धम्' —Com. on Saṃmatitarka p. 173, Purātattva Edition. अपोह

or the doctrine of negative denotation is a logical necessity of S'ûnyavâda. The doctrine is endorsed by other schools of Buddhism also. Cf. Stcherbatsky's "Conceptions of the Buddhist Nirvâṇa," p. 155 footnote 3; "But the school of Dignâga have a special theory of their own about the meaning of words according to which words express only relations, or mutual negation ( अपोह = परस्परपरिहार = अन्यव्यावृत्ति = व्यवच्छेद = परिच्छेद ) between point-instants." For an exposition of this subject see Ratnakîrti's "Apoha Vada", one of the "Six Buddhist Tracts" collected and published by Haraprasâda Sâstri ( A. S. Bengal Series ). Note, however, that the doctrine is not always put forward in the extreme form in which it has been taken by its critics: cf. "नास्माभिरपोहशब्देन विधिरेव केवलोऽभिप्रेतः नाप्यन्यव्यावृत्तिमात्रं, किंत्वन्यापोहविशिष्टो विधिः शब्दानामर्थः ततश्च न प्रत्येकपक्षोपनिपातिदोषावकाशः"—Ratnakîrti's "Aphohasiddhi" p. 3.

The subject of अपोह was hotly discussed by the Buddhists, the Jainas and the Brâhmaṇas in the age of Kumârila, and also in the few centuries before and after him. See Kumârila's S'loka-Vârtika, which contains a special section on the criticism of अपोह. Both the criticism and the original doctrine have been examined at great length in the section on "शब्दार्थ-तत्संबन्धमीमांसा" in Abhayadeva's commentary on Saṃmatitarka pp. 173–270, which refers also to the contributions of Uddyotakara and numerous other logicians to the discussion of this great question. See also S'ântarakṣita's "Tattva-saṃgraha" with Kamalaśîla's "Pañjikâ"; and for a brief discussion, Siddharṣi's commentary on Nyâyâvatâra pp. 4–5. The subject has been also fully discussed from the Naiyâyika ( Brâhmaṇa ) point of view in the Nyâya-mañjarî of Jayanta. See Vol. I, pp. 290–327.

अपरे सामान्यमात्रमेव etc.—As Kumârila contends: "अगोनिवृत्तिः सामान्यं वाच्यं यैः परिकल्पितम् । गोत्वं वस्त्वेव तैरुक्तमगोऽपोहगिरा स्फुटम् ॥" Note, however, that in Kumârila's philosophy सामान्य is only the other side of विशेष, both of them being aspects of the same reality.

विधिवादिनस्तु etc.—These are different from the विधिवादिन्s referred to in the com. on Saṃmatitarka "अत्र विधिवादिनः प्रेरयन्तिetc." whose "विधिरेव शब्दस्यार्थः" means that the denoted object is a positive reality, and not an empty negation (अपोह). The विधिवादिन्s, the नियोगवादिन्s and the प्रैषवादिन्s are different forms of one common doctrine that every proposition ( वाक्य ) is a positive or negative *mandate*, ( आम्नायस्य क्रियार्थत्वात्–Pûrva Mîm. Sûtra ) no proposition being, in its ultimate effect, a mere statement of fact. Even sentences with a verb in the indicative mood are understood by them as subordinate to some other sentence which has a verb in the imperative mood. Thus all such texts as तत्त्वमसि, सर्वं खल्विदं ब्रह्म, ऐतदात्म्यमिदं सर्वम् are subordinate to such central texts as तद्विजिज्ञासस्व, सोन्वेष्टव्यः विजिज्ञासितव्यः etc. ( See the concluding paragraphs of Râmânuja's S'rî-Bhâṣya on 'जिज्ञासाधिकरण' ( I. i. 1 ) and his exposition of 'समन्वयाधिकरण' ( I. i. 4 ). This logical attitude may be compared with that of the present-day Pragmatists in American and European philosophy. The following passage in L. P. Jack's "The Education of the Whole Man." on 'disguised imperatives' will be found interesting: "Then it was that it flashed upon me with the force of a revelation that all philosophies and sciences, without exception —both those I agreed with and those I disagreed with—were *injunctions to live in a particular way and avoid living in other ways*. They all come to their spear-point, so to speak, in some kind of *injunction*. They were all disguised imperatives. Behind the information was the *command*, which took the form, "Live in this way and avoid living in that." Commands disguised as information." On the subject of वाक्यार्थवैविध्य, क्रियावाक्यार्थत्वं, विधि, नियोग etc. see Nyâyamañjarî of Jayanta Vol. I.

## St. XV.

एवमन्यासामपि etc.—Cf. पञ्चविपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात्। अष्टाविंशति भेदा तुष्टिर्नवधाऽष्टधा सिद्धिः ॥—S. K. 47. पञ्चविपर्ययभेदाः=अविद्याऽस्मिता-राग-द्वेषा-भिनिवेशाः यथासंख्यं तमो-मोह-महामोह-तामिस्रान्धतामिस्रसंज्ञकाः पञ्चविपर्ययविशेषाः S. T. K. ibid. The latter are the technical terms of Sâṁkhya philosophy for अविद्या etc. of Yoga which are thus defined in Patañjali's Sûtras: (1) अनित्या-शुचि-दुःखा-नात्मसु नित्य-शुचि-सुखा-त्मख्यातिरविद्या (Pat. Yoga sûtras II. 5); (2) दृग्दर्शनशक्त्योरेकात्मतेवास्मिता (II. 6); सुखानुशयी रागः (II. 7); दुःखानुशयी द्वेषः (II. 8); स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः (II. 9). For further light on each of these which are collectively called "क्लेशs" by Patañjali, and "विपर्ययs" by Vyâsa by way of giving a synonym of क्लेश, see Vyâsa-Bhâṣya.

ब्राह्मप्राजापत्य etc.—Cf. "अष्टविकल्पो दैवः तैर्यग्योनश्च पञ्चधा भवति। मानुषश्चैकविधः समासतो भौतिकः सर्गः ॥" (S. K. 53) As regards details cf. Tattva-Kaumudi, Mâṭhara-Vṛtti and Sâṁkhya-Candrikâ give पैत्र or पित्र्य for सौम्य of our text and place it after ऐन्द्र; तैर्यग्योन is the same. The hetu in the note of Vācaspatimiśra on "मानुषश्चैकविधः" will be fonnd interesting: "ब्राह्मणत्वाद्यवान्तरजातिभेदाविवक्षया संस्थानस्य चतुर्ष्वपि वर्णेष्वविशेषात्।"

बाधिर्यकुष्ठता etc.—अशक्ति (Infirmity) which is second on the list after विपर्यय is of twenty-eight kinds, of which eleven are इन्द्रियवधs, and seventeen बुद्धिवधs, nine of the latter being the opposites of nine तुष्टिs (Complacencies) and eight the opposites of eight सिद्धिs (Attainments) (एकादशेन्द्रियवधाः सहबुद्धिवधैरशक्तिरुद्दिष्टा। सप्तदशवधा बुद्धेर्विपर्ययात् तुष्टिसिद्धीनाम्—S. K. 49). S. T. K.:—"बाधिर्यं कुष्ठितान्धत्वं जडताजिघ्रता तथा। मूकता कौण्यपङ्गुत्वे क्लैब्योदावर्तमन्दताः"—thus mentioning मन्दता instead of मत्तता as found in our text.

तुष्टिनवकविपर्ययसिद्ध्यष्टकविपर्यय etc.—The nine तुष्टिs (Complacencies) are thus classified in the S. K. "आध्यात्मिकयश्चतस्रः प्रकृत्युपादानकालभागाख्या बाह्या विषयोपरमात् पञ्च च नव तुष्टयोऽभिमताः" While accepting that आत्मन् is distinct from प्रकृति, if a man stops there and does not strive to realise the distinction by

श्रवण, मनन etc. he suffers from तुष्टि ( Complacency ) regarding the Self ( आध्यात्मिकी ). This is of four kinds: (1) प्रकृति (Nature), (2) उपादान ( Means ), (3) काल ( Time ) and (4) भाग ( Luck ).

( 1 ) The first is thus explained in S. T. K. " कस्यचिदुपदेशे विवेकसाक्षात्कारो हि प्रकृतिपरिणामभेदः तं च प्रकृतिरेव करोतीति कृतं ध्यानाभ्यासेन तस्मादेवमेवास्स्व वत्स इति येयमुपदेष्टव्यस्य शिष्यस्य तुष्टिः प्रकृतौ सा तुष्टिः प्रकृताख्या अम्भ इत्युच्यते "—It is the attitude of complacently resting in प्रकृति instead of rising to the realisation of the true nature of पुरुष—the result of a kind Natural Fatalism. It is esoterically known as 'अम्भः' ( 2 ) The second: " या तु प्रकृत्यपि विवेकख्यातिर्न सा प्रकृतिमात्राद्भवति, मा भूत् सर्वस्य सर्वदा तन्मात्रस्य सर्वान् प्रत्यविशेषात्, प्रव्रज्यायास्तु सा भवति, तस्मात् प्रव्रज्यामुपाददीथाः कृतं ते ध्यानाभ्यासेनायुष्मन् इत्युपदेशे या तुष्टिः सोपादानाख्या "—One may accept the view that Natural Fatalism ( प्रकृति ) is wrong, because Nature is the same for all, and consequently the विवेकख्याति of one who is content with the fatalism of Nature is no good. But if he thinks that Asceticism is all that one has to add he is mistaken. For without the practice of ध्यान, mere asceticism is useless. ( 3 ) The complacency of such a man is complacency in regard to Means ( उपादान ). This complacency is esoterically known as 'सलिल'. " या तु प्रव्रज्याऽपि सद्यो न निर्वाणमेति सैव कालपरिपाकमपेक्ष्य सिद्धिं ते विधास्यति अलमुत्तप्ततया तव ' इत्युपदेशे या तुष्टिः सा कालाख्या—ओघ इत्युच्यते ॥ " To imagine that प्रव्रज्या in the fulness of time with bears its fruits and therefore ध्यान is unnecessary is wrong. This kind of complacency—a pathetic belief in the potency of time—is कालाख्या तुष्टि which is esoterically known as 'ओघ'. ( 4 ) "या तु प्रकृतेर्न कालान्नाप्युपादानाद्विवेकख्यातिः अपि तु भाग्यादेव, अत एव मदालसापत्यान्यतिबालानि मातुरुपदेशादेव विवेकख्यातिमन्ति मुक्तानि बभूवुः तस्माद् भाग्यमेव हेतुर्नान्यद् इत्युपदेशे या तुष्टिः सा भागाख्या सा वृष्टिरित्युच्यते ॥ " When the realisation of the distinction between पुरुष and प्रकृति (विवेकख्याति) is regarded as a matter of pure luck ( *e. g.* the children of मदालसा who practised neither प्रव्रज्या nor ध्यान before realising the distinction ), it is a kind of तुष्टि which is called 'भाग', and is esoterically known as 'वृष्टि'. Next comes the group of five बाह्यतुष्टिs, which with the

four internal ( आध्यात्मिकी ) mentioned above make up *nine* in all. ( 1 ) The वैराग्य ( cessation of attachment to worldly life ) is necessary for realising the distinction between प्रकृति and पुरुष, but it is not all. There are some people, however, who imagine that the renunciation of the five विषयs—शब्द, रूप, रस, गन्ध and स्पर्श is enough; or if they renounce objects of comfort and enjoyment ( विषयs) for any of the following reasons, it is all that they need do. These reasons are: ( 1 ) The trouble and the humiliation involved in earning wealth—अर्जन. The renunciation caused by this motive is esoterically known as 'पार'; (2) The trouble involved in protecting it from the depredations of robbers and from accidental loss. This is renouncing a thing in order to escape the trouble of protecting it ( रक्षण ),—which in esoterical language is called 'सुपार'. (3) To cease to care for wealth for the reason that after all it will be exhausted is the kind of renunciation arising from the sense of प्रक्षय and is esoterically known as 'पारापार'. The thought that enjoyment of विषयs after all whets the desire of enjoyment all the more may be the reason for renunciation in some cases. This, which arises from reflecting on the nature of भोग is not, however, all that is needed. It is called भोग ( दोषदर्शन ) तुष्टि, and in esoteric language 'अनुत्तमाम्भः' (5) Lastly, all enjoyments involve हिंसा. Desisting from विषयs with this idea, is तुष्टि from the idea of हिंसा—called esoterically 'उत्तमाम्भः'.

त्रयो दुःखविघाताः etc.—Next, we come to सिद्धिs ( Attainments ). These are enumerated as follows: "ऊहः शब्दोऽध्ययनं दुखविघातास्त्रयः सुहृत्प्राप्तिः। दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः" ॥ ( S. K. 51 )—S. K. T. adopts its own order for explanation. (1) अध्ययनम्=विधिवद्गुरुमुखादध्यात्मविद्यानामक्षरस्वरूपग्रहणम्—*i.e.* Study of the letter of the Sâstra under a teacher. This is called 'तारम् (2) शब्दः—' शब्द इति पदं शब्दजनितमर्थज्ञानमुपलक्षयति—Study of the meaning of the S'âstra, (3) ऊहः=तर्क आगमाविरोधिन्यायेनागमार्थपरीक्षणम्—also called मनन as distingnished from the first two which constitute श्रवण. ऊह = Reasoning in harmony with the Scriptures. It is called 'तारतारम्' in mystic lanuage. (4) सुहृत्प्राप्तिः

—Discussion with friends: = स्वोत्प्रेक्षितं मननममननमेव आसुहृत्संमतम् न्यायेन स्वयंपरीक्षितमप्यर्थं न श्रद्दधते, न यावद् गुरुशिष्यसब्रह्मचारिभिः संवाद्यते अतः सुहृदां गुरुशिष्यसब्रह्मचारिणां संवादकानां प्राप्तिः सुहृत्प्राप्तिः This is known in mystic lore as 'रम्यक'. (5) दानं = शुद्धिर्विवेकज्ञानस्य ( From दैप् शोधने, to purify ) One's own ज्ञान has to be confirmed by discussion with friends. This purification takes place when the विवेकख्याति is absolutely freed from संशय and विपर्यास together with their वासना or संस्कार. ( अविप्लवः शुद्धिः सा च सवासनसंशयविपर्यासानां परिहारेण विवेकसाक्षात्कारस्य स्वच्छप्रवाहेऽवस्थापनम् "—This सिद्धि is known in esoteric language as 'सदामुदितम्'. In addition to these five, there are three principal सिद्धिs consisting of the distinction of the three kinds of दुःख viz. आध्यात्मिक, आधिभौतिक and आधिदैविक. These are called प्रमोद, मुदित and मोदमान.

संवरप्रतिसंवर—For this reading of the AMP. edition, one may read संचरप्रतिसंचर—which are used elsewhere for evolution and involution respectively.

For "the whole passage from 'सांख्यमते' to पञ्चविंशतिः is extracted from Guṇaratna's com. p. 97 on Ṣad. D. Samuccaya 34" in the Notes p. 169 read: "The whole passage ......is reproduced in Guṇaratna's com. ......" For the Note on महत्तत्त्व—generally understood as Cosmic Intelligence—consult Keith's "Sâṁkhya System" p. 79 where the earlier view is distinguished from that of the Sâṁkhya Kârikâ where "Stress is laid on the intellect as psychological." On p. 171 of the Notes read "The same are reproduced in Guṇaratna's com." instead of "The same as in......On p. 174 of the Notes, for "The slip was originally Guṇaratna's etc." read "The slip was originally Malliṣeṇa's, which has been repeated by Guṇaratna ......... Could it be that in the time of Malliṣeṇa (read this for 'Guṇaratna')" On p. 175 ll. 1–2 for "The whole passage......is reproduced from Guṇaratna's commentary" read "The whole passage is reproduced in Guṇaratna' commentary".

वादमहार्णवोऽभ्याह—In the AMP. edition p. 123 footnote 'वादमहार्णव' is said to be 'वेदान्तग्रन्थविशेषः' Evidently this is a

mistake, arising from the figure of बिम्बप्रतिबिम्ब which as a matter of fact is as much a property of Sāṁkhya as of Vedânta. वादमहार्णव seems to be a work of Sāṁkhya, as is clear from the context, where a number of authorities are quoted in support of the Sāṁkhya theory: Patañjali ( This should be Vyâsa, the commentator of Patañjali who may well be regarded as an authority on Sāṁkhya which is a sister science of Yoga ), Vâcaspati Miśra, Âsuri and Vindhyavâsin. Âbhayadeva Sûri, a Jaina writer, is also said to have composed a work of the same name (see the Praśasti of Prabhâvakacarita, verse 4: शिष्योऽस्याभयदेवसूरिरभवत्......ग्रन्थो वादमहार्णवोऽस्य विदितः."

विन्ध्यवासी त्वेवं भोगमाचष्टे—Vindhyavâsin is well known as a contemporary of Vasubandhu who lived in the third century A. D. As regards his indentification with Iśvarakṛṣṇa, the author of the Sâṁkhya Kārikas, see J. R. A. S. 1905. But this hypothesis is now definitely rejected, and we know that the name of this 'dweller in the Vindhyas' was Rudrila, as we see from a verse cited by Kamalaśîla in his commentary on the Tattva-Saṁgraha of S'ântarakṣita which runs as follows: "यदेव दधि तत्क्षीरं यत्क्षीरं तद्दधीति च। वदता रुद्रिलेनैव ख्यापिता विन्ध्यवासिता"—*i. e.* The Sāṁkhya philosopher—Rudrila—who identifies cause and effect in his सत्कार्यवाद—is indeed a man of the jungle of the Vindhya mountain, who does not know what is milk and what is curds and how one differs from the other.

तथा चासुरिः—आसुरि was a direct pupil of कपिल. For the Sāṁkhya गुरुशिष्यपरम्परा vide—एतत् पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ। आसुरिरपि पञ्चशिखाय तेन बहुधा कृतं तन्त्रम्॥—S. K. 70. Mâṭhara supplies the later names betwen पञ्चशिख and ईश्वरकृष्ण as follows: पञ्चशिखेन तस्मात् भार्गवोलूकवाल्मीकिहारीतदेवलप्रभृतीनागतम्। See also p. 39 of Keith's "Sâṃkhya System."

---

### St. XVI.

द्विष्ठसंबन्धसंवित्तिः etc.—Quoted in Ratnâkarâvatârika ( Pariccheda I. p. 4. 2 ).

एवं यौगाभिप्रेतः etc.—Note that this doctrine of the Naiyâyikas which is the opposite of that of the Buddhist logician Dharmakîrti is similarly rejected. This is in order to establish the resulting अनेकान्तवाद of the Jainas. अथवा पूर्वार्धमिदमन्यथा... व्याख्येयम्। सौगताः किलेत्थं प्रमाणयन्ति-सर्वं सत् क्षणिकं etc. cf. यत्सत्तत्क्षणिकं यथा जलधरः सन्तश्च भावा इमे सत्ताशक्तिरिहार्थकर्मणि मिते सिद्धेषु सिद्धा च सा। नाप्येकैवविधान्यदापि परकृत्नैव क्रिया सा भवेत् द्वेधापि क्षणभङ्गसंगतिरतः साध्यैव विश्राम्यति॥ For a statement of क्षणभङ्गवाद see Ratnakîrti's Tract on 'क्षणभङ्गसिद्धि,' and Keith's "Budhist Philosophy" pp. 181–184, also S'ântarakṣita's Tattva-Saṃgraha with Kamalas'îla's Pañjikâ—Section on स्थिरभावपरीक्षा. (G.O.S.Tattva-saṃgraha Vol. I ). For its criticism, see Sâṁkara Bhâṣya on Br. Sûtras II, ii, 19–22. The Jaina position is thus argued and summed up by Hemacandra who quotes " अर्थक्रिया न युज्येत नित्यक्षणिकपक्षयोः। क्रमाक्रमाभ्यां भावानां सा लक्षणतया मता॥" cf. also Guṇaratna's com. on क्षणिकाः सर्वसंस्काराः Saḍ. Darśana Sam. verse 7. pp. 30–31. On p. 195 of the Notes, in l. 3 from the bottom read " Br. Sûtras II, ii, 11–17 and in the last line: "Prajnâkara Gupta's date is given in Dr. Vidyâbhûṣana's H. I. L. about 940 A. D." On p. 199 of the Notes—for "if there is" and " we cannot " in ll. 6 and 7, read "if there were" and " we could not" respectively. For " S'ad. Com." read " Ṣaḍ. Com." of Guṇaratna; and the same for " S'ad " on p. 202. To the list of Reference Books add: 6 Abhayadeva's Com. on Saṃmatitarka, 7. Nyâyabindu of Dharmottara with Nyâyabinduṭîkâ of Dharmakîrti 8. S'ântarakṣita's Tattva-Saṃgraha with Kamalaśîla's Pañjika, 9. " Six Buddhist Tracts ", 10. Mahâyâna Sûtrâlaṁkâra Mâdhyamikâ Vṛtti, 11. Vijnaptimatratâsiddhi, 12. Account of Buddhist schools in Kern's " Indian Buddhism ", 13. Keith's "Buddhist Philosophy", 14. Sogen's "Systems of Buddhist Thought", 15. Suzuki's "Outlines of Mahâyâna Buddhism ", 16 and Stcherbatsky's Introduction to his " The Conception of Buddhist Nirvāṇa ".

---

## St. XVII.

इह शून्यवादिनामयमभिसन्धिः—For S'ûnyavāda see Madhyamikâvṛtti, Stcherbatsky's "Buddhist Concept of Nirvâṇa" and Keith's "Buddhist Philosophy" Ch. XIII:—"The Negativism of the Madhyamaka".

For an examination of the doctrine from the Brâhmaṇa point of view see Kumârila's S'lokavârtika, sections on निरालम्बनवाद and शून्यवाद. For the Jaina examination, See Com. on Sammatitarka, नयमीमांसा.

सुखादि चेत्यमानं हि—Quoted in Ratnâkarâvatârikâ on P.N.T. VII 55 p. 142. The whole commentary on "प्रमाता प्रत्यक्षादिप्रसिद्ध आत्मा" and "चैतन्यस्वरूपः परिणामी कर्ता साक्षाद्भोक्ता स्वदेहपरिमाणः प्रतिक्षेत्रं भिन्नः पौद्गलिकादृष्टवांश्चायमिति" ( P. N. T. VII. 55,56 ), both in Ratnâkara and Avatârikâ, contains a good dissertation on the nature of Âtman according to the Jainas. See in this connection, Pravacanasâra. For the Buddhist examination of rival doctrines see "Tattvasaṃgraha" with Pañjikâ Vol. I., section on आत्मपरीक्षा S'l. 171–349 pp. 79–130.

For the interesting question of the nature of Âtman according to other schools, consult Jayanta's Nyâyamañjarî, Râmânuja's Srîbhâṣya etc. On p. 211 of the Notes in ll. 3 & 4 from the bottom "observation" is a wonderful misprint for "obscuration." It puzzled me for a few minutes to find out with what word it could have been confounded. On संवृति *i. e.* 'concealment' or 'obscuration,' see Suzuki's "Outlines of Mahâyâna Buddhism." 'संवृति' corresponds to "व्यावहारिकी सत्ता" which conceals ( by the आवरणशक्ति of अविद्या or माया ) the "पारमार्थिकी सत्ता" which lies beyond it.

स्वज्ञानावरणवीर्यान्तराय etc.—"पढमं णाणावरणं, बीयं पुण दंसणस्स आवरणं। त इयं च वेयणियं, तहा चउत्थं च मोहणीयं"—*i. e.* ज्ञानावरण, which is the first of the four obscuring Karmans. वीर्यान्तराय—कर्मविशेषः यस्योदये उत्साहप्रतिघातो भवति *i. e.* the Karman which obstructs the exercise of moral will; moral weakness. See A. M. P.'s edition of Pramâṇamîmâṃsâ pp. 18–19, footnotes.

क्षयोपशम—Wearing out and ultimate cessation of karman. न सन्नसदसत्र......तत्त्वमाध्यात्मिका जगुः—I have no doubt the correct reading is "तत्त्वं माध्यमिका जगुः"—the reference being to the famous Madhyamaka or Mâdhyamika school of Buddhism.

"The relation between mental and material things is a case of causation but of a special kind since it may be said to be simultaneous, in lieu of subsequent. This raises a difficulty as suggesting the Vijñânavâda theory that there is no real externality in things, but a mistaken and illusory attribution of externality to that which is internal, as can be shown from the fact that we always experience an object and its cognition together. The Sautrântikas reject this view; the facts are, they argue, clearly that what we see are objects, as external, not merely internal modifications of consciousness, to which in point of fact we do not in everyday life attend as such. The idealist admission that things appear as if external undermines their whole position, for the conception of externality could not rise without real ground. There is no real difficulty as to simultaneity between the object and the perception of it; we do not, as the objection to this possibility seems to imply, first know the object and then know the perception, but the object by contact with the sense organ impresses its form on the cognition, and then from the form we conclude by inference the existence of an external object which causes it, just as we infer nourishment from a thriving appearance, nationality from language, and love from emotion. The object moulds our knowledge without ceasing to be itself. Cognition cannot explain our objects; in itself it is the same and there would be no differentiation of objects if objects were derived from it. The diversity of cognitions in an observer, himself remaining the same, is explicable only by the operation on him of external things, a fact which gives us the realization of the self as the conscious subject ( ālaya-vijñāna ) in whom individual cognitions ( pravṛtti-vijñāna ), caused by external things appear from time to time.

The Vaibhāṣikas, though realists, object to this doctrine of the Sautrāntikas–indeed a fanciful etymology gives them their name because of their habit of styling the doctrine of inferability 'contradictory chatter ( viruddha bhāṣā )'. If knowledge is thus reduced to inferability, then there is no object of perception, and, this being so, there is no basis for the observation of the invariable concomitance, which is the essential ground of inference, and we shall have a complete contradiction with all actual experience. Knowledge, in fact, is of two kinds; perception as indeterminate, that is free from the operation of imagination, which is authoritative, and determinate perception which is worked up by imagination and so is not directly authoritative, although what is inferred serves as a basis for action and common acceptance; we can verify by action the truth of inferences, and we can accept statements on authority as resting ultimately on perception."

—Keith's "Buddhist Philosophy" pp. 161-162.

---

### St. XVIII.

Add as an Appendix:—

**बौद्धा बुद्धिक्षणपरंपरा** etc.—This has a parallel both in language and in thought in the following paragraph of P. N. T. Ratnâkarâvatârikâ Pari. VII, p. 142:—

बौद्धास्तु बुद्धिक्षणपरंपरामात्रमेवात्मानमाम्नासिषुः, न पुनर्मौक्तिककणनिकरनिरन्तरानुस्यूतैकसूत्रवत् तदन्वयिनमेकम्। ते लोकायतलुण्टाकेभ्योऽपि पापीयांसः। तद्भावेपि तेषां स्मरणप्रत्यभिज्ञानाद्यघटनात्। तथाहि—पूर्वबुद्ध्यानुभूतेऽर्थे नोत्तरबुद्धीनां स्मृतिः संभवति ततोन्यत्त्वात् संतानान्तरबुद्धिवत्। न ह्यन्यदृष्टोऽर्थोऽन्येन स्मर्यते। अन्यथैकेन दृष्टोऽर्थः सर्वैः स्मर्येत। स्मरणाभावे च कौतस्कुती प्रत्यभिज्ञाप्रसूतिः। तस्याः स्मरणानुभवोभयसंभवत्वात्। पदार्थप्रेक्षणप्रबुद्धप्राक्तनसंस्कारस्य हि प्रमातुः स एवायमित्याकारेणेयमुत्पद्यते। अथ स्यादयं दोषो यद्यविशेषेणान्यदृष्टमन्यः स्मरतीत्युच्यते। किंत्वन्यत्वेपि कार्यकारणभावादेव स्मृतिः। भिन्नसंतानबुद्धीनां तु कार्यकारणभावो नास्ति तेन संतानान्तराणां स्मृतिर्न भवति। न चैकसांतानिकीनामपि बुद्धीनां कार्यकारणभावो नास्ति येन पूर्वबुद्ध्यनुभूतेऽर्थे तदुत्तरबुद्धीनां स्मृतिर्न स्यात्। तदप्यनवदातम्। एवमपि नानात्वस्य तदवस्थत्वात्।

अन्यत्वं हि स्मृत्यसंभवे साधनमुक्तम्। तच्च कार्यकारणभावाभिधानेपि नापगतम्। न हि कार्यकारणभावाभिधाने तस्यासिद्धत्वादीनामन्यतमो दोषः प्रतिपद्यते। नापि स्वपक्षसिद्धिरनेन क्रियते। नहि कार्यकारणभावात् स्मृतिरित्यत्रोभयप्रसिद्धोस्ति दृष्टान्तः। अथ—"यस्मिन्नेव हि संतान आहिता कर्मवासना। फलं तत्रैव संधत्ते कर्पासे रक्तता यथा॥" इति कर्पासरक्ततादृष्टान्तोऽस्तीति चेत् तदसाधीयः। साधनदूषणासंभवात्। अन्वयाद्यसंभवान्न साधनम्। नहि कार्यकारणभावो यत्र तत्र स्मृतिः कर्पासे रक्ततावदिति अन्वयः संभवति। नापि यत्र न स्मृतिस्तत्र न कार्यकारणभाव इति व्यतिरेकोऽस्ति। असिद्धत्वाद्युद्भावनाच्च न दूषणम्। नहि ततोऽन्यत्वादित्यस्य हेतोः कर्पासे रक्ततावदित्यनेन कश्चिद्दोषः प्रतिपाद्यते। किं च। यद्यन्यत्वेपि कार्यकारणभावेन स्मृतेरुत्पत्तिरिष्यते तदा शिष्याचार्यादिबुद्धीनामपि कार्यकारणभावसद्भावेन स्मृत्यादि स्यात्। अथ नायं प्रसङ्गः। एकसंतानत्वे सतीति विशेषणादिति चेत् तदयुक्तम्। भेदाभेदपक्षाभ्यां तस्योपक्षीणत्वात्। क्षणपरंपरातस्तस्याभेदे हि क्षणपरंपरैव सा तथा च संतान इति न किंचिदतिरिक्तमुक्तम्। भेदे तु पारमार्थिकोऽपारमार्थिको वासौ स्यात्। अपारमार्थिकत्वे स्वस्य तदेव दूषणम्। पारमार्थिकत्वे स्थिरो वा स्यात् क्षणिको वा क्षणिकत्वे संतानिनिर्विशेष एवायमिति किमनेन स्तेनभीतस्य स्तेनान्तरशरणस्वीकरणकारिणा। स्थिरमथ संतानमभ्युपेयाः प्रथयन्तं परमार्थसत्स्वरूपम्। अमृतं पिब पूतयाऽनयोक्त्या स्थिरवपुषः परलोकिनः प्रसिद्धेः॥"—P. N. T. Ratnâkarâvatârikâ. Ch. VII pp. 142–143.

Cf. a similar line of argument in S'âmkara Bhâṣya on Br. Sû. II. ii. 25—अनुस्मृतेश्च.

## Appendices

1. "In Hindu and Jaina accounts of Buddhist philosophy, we find mention of only four schools, viz. (1) the Mâdhyamikas, or nihilists, (2) the Yogâcâras, or subjective idealists, (3) the Sautrântikas or representationists and (4) Vaibhâshikas or presentationists. The chief tenets of each of these schools are supposed to be summed up in the well-known stanza:—

अर्थो ज्ञानसमन्वितो मतिमता वैभाषिकेणोच्यते
प्रत्यक्षो नहि बाह्यवस्तुविसरः सौत्रान्तिकैराश्रितः॥
योगाचारमतानुगैरभिमता साकारबुद्धिः परा
मन्यन्ते बत मध्यमाः कृतधियः स्वस्थां परां संविदम्॥

These four probably represented the principal classes of Buddhists who flourished in India at a time when militant

Vedântism was hurling the missiles against the moribund faith of Sugata."

—Sogen's "Systems of Buddhist Thought".

Mallisena does not mention any of these four schools by name, but they are just those which have been criticised by him. The doctrine attributed to the Madhyamaka in the last line of the Stanza makes it identical with the doctrine of "Para-Brahma" as maintained in the S'ânkara school. The Jaina, like the other schoolmen, takes it be the doctrine of शून्यता in the sense of Universal Void or Emptiness which is the very opposite of S'ankara's Universal Plenum ( पूर्ण—cf. "पूर्णमिदं पूर्णमदः पूर्णात् पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ।" Upaniṣad. ) ], and yet it is curious that as a representative text of the शून्यवाद Mallisena quoted a passage ( "सर्व एवायमनुमानानुमेयव्यवहारो न बुद्ध्यारूढेन धर्मधर्मिभावेन न बहिः सदसत्त्वमपेक्षते" ) which has been attributed to Diṅnâga ( See Randle's "Fragments from Diṅnâga" and Pârthasārathi on Mîm. S'l. Vârt. and Uddotakara's Nyâya-Vârtika and Vâcaspati's N. V. Tâtparya ) who was certainly not a Mâdhyamika S'ûnyavâdin.

S'abarasvâmin and Kumârila—the great Bhâṣyakâra and Vârtikakâra respectively of the Mîmâṃsâ Darśana—, however, use the word 'शून्य' not in the sense of Universal Void, but as a negation of distinction between ज्ञान and अर्थ, the आकार *i.e.* the particular form, being one which cannot be said to be either that of ज्ञान or that of अर्थ. The शून्यवाद is thus different from निरालम्बनवाद in which only one of the two, viz. ज्ञान is supposed to possess the आकार, thus rendering the reality of the other superfluous. Both these have been considered apart from the शून्यवाद of Stanza XVII.

Cf. "ननु सर्वं एव निरालम्बनः स्वप्नवत् प्रत्ययः। प्रत्ययस्य हि निरालम्बनतया स्वभाव उपलक्षितः स्वप्ने । जाग्रतोऽपि स्तम्भ इति वा कुड्य इति वा प्रत्यय एव भवति । तस्मात् सोऽपि निरालम्बनः ॥ उच्यते । स्तम्भ इति जाग्रतो बुद्धिः सुपरिनिश्चिता कथं विपर्यसिष्यतीति । स्वप्नेऽप्येवमेव सुपरिनिश्चितासीत् । प्राक् प्रबोधनात् न कश्चिद्विशेष इति । न । स्वप्ने विपर्ययदर्शनात् । अविपर्ययाच्च

इतरस्मिन् । तत्सामान्यादितरत्रापि भविष्यतीति चेत् यदि स्वप्नप्रत्ययस्य मिथ्याभावः जाग्रत्प्रत्ययस्यापि तथा भवितुमर्हति । अथ प्रतीतिस्तथाभावस्य हेतुः न शक्यते प्रत्ययत्वाद् अयमन्य इति वक्तुम् । अन्यतस्तु स्वप्नप्रत्ययस्य मिथ्याभावो विपर्ययादवगतः । कुत इति चेत् । सनिद्रस्य मनसो दौर्बल्यात् निद्रा मिथ्याभावस्य हेतुः स्वप्नादौ स्वप्नान्ते च । सुषुप्तस्याभाव एव । अचेतयन्नेव हि सुषुप्त इत्युच्यते । तस्माज्जाग्रतः प्रत्ययो न मिथ्येति । ननु जाग्रतोऽपि करणदोषः स्यात् । यदि स्यात् अवगम्येत । स्वप्नदर्शनकालेऽपि नावगम्यत इति चेत् । तत्र प्रबुद्धो ह्यवगच्छति निद्राक्रान्तं मे मन आसीदिति ॥

शून्यस्तु कथम्—अर्थज्ञानयोराकारभेदं नोपलभामहे । प्रत्यक्षा च नो बुद्धिः । अतस्तद्भिन्नमर्थरूपं नाम न किंचिदस्तीति पश्यामः ॥ स्यादेतदेवं यद्यर्थाकारा बुद्धिः स्यात् निराकारा तु नो बुद्धिः आकारवान् बाह्योऽर्थः । स हि बहिर्देशसंबद्धः प्रत्यक्षमुपलभ्यते । अर्थविषया । हि प्रत्यक्षबुद्धिः न बुद्ध्यन्तरविषया । क्षणिका हि सा न बुद्ध्यन्तरकालमवस्थास्यत इति । उत्पद्यमानैवासौ ज्ञायते । ज्ञापयति च अर्थान्तरप्रदीपवदिति यदुच्यते तन्न । न ह्यज्ञातेऽर्थे कश्चिद् बुद्धिमुपलभते । ज्ञाते तु अनुमानादवगच्छति । तत्र यौगपद्यमनुपपन्नम् । ननूत्पन्नायामेव बुद्धौ ज्ञातोऽर्थ इत्युच्यते नानुत्पन्नायाम् । अतः पूर्वं बुद्धिरुत्पद्यते पश्चाज्ज्ञातोऽर्थः । सत्यम् । पूर्वं बुद्धिरुत्पद्यते न तु पूर्वं ज्ञायते । भवति हि कदाचिदेतद् यज्ज्ञातोऽप्यर्थः सन् अज्ञात इत्युच्यते । न चार्थव्यपदेशमन्तरेण बुद्धे रूपोपलम्भनम् । तस्मान्नाव्यपदेश्या बुद्धिः अव्यपदेश्यं च नः प्रत्यक्षम् । तस्मादप्रत्यक्षा बुद्धिः । अपि च काममेकरूपकत्वे बुद्धेरेवाभावः नार्थस्य प्रत्यक्षस्य सतः । न चैकरूप्यम् । अनाकारामेव बुद्धिमनुमिमीमहे । साकारं चार्थं प्रत्यक्षमेवावगच्छामः । तस्मादर्थालम्बनः प्रत्ययः । अपि च नियतनिमित्तस्तन्तुष्वेवोपादीयमानेषु पटप्रत्ययः । इतरथा तन्त्वादानेपि कदाचिद् घटबुद्धिरविकलेन्द्रियस्य स्यात् । न चैवमस्ति । अतो न निरालम्बनः प्रत्ययः । अतो न व्यभिचरति प्रत्यक्षम् ॥"

—S'abara Bh. on P. Mîm. I. i. 5.

—Note that the second paragraph begins with "शून्यस्तु" and yet ends with "निरालम्बनः प्रत्ययः"—thus making little distinction between शून्यवाद and निरालम्बनवाद. The same is the case with the Vârtika also.

See also Kumârilâs S'l. Vârt on निरालम्बनवाद and शून्यवाद, and S'ânkara Bh. on II. ii. "वैधर्म्याच्च न स्वप्नादिवत्."

2. "The fundamental doctrine of this Mādhyamika school has been imperfectly understood and grossly misrepresented by the so-called scholars of Buddhism in Europe, and latter-

